देवरपत्न्योश्चाङ्गविकलता तरुणी चेयं मत्सखी तस्मात्त्वयात्र स्थातव्यम्' इति संकेतद्योतकस्य श्रवणाद्दशसंकेतप्रतीतिस्तर्कशून्यस्योदेतुमर्हति । 'अङ्गभङ्गोल्लसल्लीला तरुणी स्मरतोरणम् । तर्ककर्कशपूर्णोक्तिप्राप्तोत्कटधियां वृथा' इत्यादयो निन्दावादा आलङ्कारिकग्रन्थेषु श्रूयमाणा वादिविजयातिरिक्तफलानुपहिततर्कमात्रप्रसक्तपुरुषगोचरा न तर्कसामान्यगोचरा इति न कश्चिद्विरोधः । यत्त्वस्य निःश्रेयसार्थत्वमुक्तं महर्षिणा तन्न प्रयोजनान्तरव्यावृत्त्यर्थं किंतु मोक्षस्य परमप्रयोजनत्वेन तत्साधनतया चास्य शास्त्रस्यात्यन्तादरणीयत्वबोधनार्थम् । अत एवास्य शास्त्रस्य सर्वशास्त्रप्रदीपत्वं सर्वकर्मोपायत्वं च वृद्धैरुक्तं संगच्छते ।

इदं च शास्त्रमस्मिँल्लोके महर्षिप्रवराभ्यां **कणादगौतमाभ्यां** प्रवर्तितम् । यद्यप्येतत्प्रणीतयोर्दर्शनयोरस्ति कतिपयेषु स्थानेषु मनाग्वैलक्षण्यं तथापि बहुतरसालक्षण्यात्प्राचीनैः पण्डितैरुभयत्रैकेनैव यत्नेन शिष्यान्व्युत्पादयितुं शास्त्रद्वयदृष्टां प्रक्रियां तादृशसिद्धान्तांश्च सिद्धान्तपूर्वपक्षभावेनोपन्यस्य निबन्धाः प्रकरणानि च प्रणीतानि । तेष्वन्यतमोऽयम**न्नंभट्ट**प्रणीत**स्तर्कसंग्रहः** । अयमध्ययनार्हग्रन्थगुणगणाभोगेन सर्वेषां समादरपात्रमभूत् ।

**अन्नंभट्ट**स्तु न तर्कशास्त्रमात्रे निपुणः किंतु सर्वेषु शास्त्रेषु, तत्रापि न केवलं निपुणः अपि तु महानिबन्धप्रणेतासीत् । अनेन ह्यपूर्वबुद्धिविभवशालिना **व्याकरणे** पाणिनीयसूत्रेषु सूत्रपाठक्रमेण **मिताक्षरा**भिधा वृत्तिरारचिता यस्यां स्थानविशेषेषु बहुषु भाष्यकाशिकाकृतोर्मतभेदो विशदं निरूपितः । तथा **भाष्यप्रदीपोद्द्योतनं** नाम **कैयट**कृतप्रदीपाख्यमहाभाष्यटीकायाष्टीका प्रणीता । **न्याये** च **चिन्तामण्यालोकसिद्धाञ्जनं** नाम तत्त्वचिन्तामणेः पक्षधरमिश्रापरनामधेयजयदेवमिश्रकृतालोकाख्यटीकायाष्टीका, तर्कभाषातत्त्वबोधिन्याष्टीका, **तर्कसंग्रहः**, तट्टीका **तर्कदीपिका**

चैते ग्रन्थाः कृताः । एवं साक्षात्तत्त्वचिन्तामणेरप्येतत्कृतं व्याख्यानं[१] मैसुरराजस्य पुस्तकसंग्रहालयेऽस्तीति शृणुमः । अध्वरमीमांसायां च तन्त्रवार्तिकटीकायाः सोमेश्वरभट्टकृतराणकापरपर्यायन्यायसुधा-याष्टीका राणकोज्जीवनी नाम तथा जैमिनीयसूत्रवृत्तिश्च कृता । एवं ब्रह्मसूत्रेष्वप्यस्त्यस्य वृत्तिः । एते चोपलब्धा ग्रन्था उक्ताः । एतेनास्य पदवाक्यप्रमाणपारावारीणधुरीणता स्पष्टा । अयं कृष्णा-तीरदेशस्थ इति किंवदन्ती । अस्य व्याकरणमिताक्षरासमाप्तौ 'अ-द्वैतविद्याचार्यराघवसोमयाजिकुलावतंसश्रीतिरुमलार्यवर्यस्य सूनोरन्नं-भट्टस्य कृतौ व्याकरणमिताक्षरायामित्यादिस्वकुलादिनिर्देशादयमान्ध्र-जातीय इति प्रतीयते । अयं श्रीकाशीक्षेत्रेऽध्ययनं चकारेति लोको-त्तरबुद्धिविभवशालीति च लोकैर्जेगीयमानतद्यशःश्लोकादवगम्यते । स च श्लोकः—काशीगमनमात्रेण नान्नंभट्टायते द्विजः । अपि गङ्गाजलस्नानान्नाधःकेशः कुशायते' इति ।

तस्यास्य तर्कसंग्रहस्य सत्स्वपि बहुषु व्याख्यानेषु तेषु ग्रन्थान्त-रमुखनिरीक्षणमन्तरेण गादाधरीप्रभृतिमणिदीधितिव्याख्याद्यध्ययन-पर्याप्तव्युत्पत्तिसंपादनक्षममेकमपि व्याख्यानमनासादयद्भिः श्रीमद्भग-वद्वदनवैश्वानरावतारश्रीवल्लभाचार्यप्रदर्शितरमणीयतरमार्गेण समाराधि-तनन्दनन्दनपदारविन्दप्रसादस्फुरितसकलशास्त्रतत्त्वार्थविशदान्तःक-रणैः, गुणिजनेडितचरणद्वन्द्वैः षड्दर्शनगोष्ठीविलासचतुरविद्वज्जनक-मलकुलप्रकाशनमार्तण्डैः, वादिव्रातगजेन्द्रदुर्मदसंकर्षणपञ्चास्यैः, गुणि-जनाभिलषितफलप्रदानचिन्तामणिभिः, पुष्कर्णाद्विजज्ञातिस्वान्तानन्द-पयोनिधिवर्धनपूर्णचन्द्रैः, स्वयशश्चन्द्रिकाधवलितदिगन्तैः सिन्धुदेश-ललामभूतैः श्रीमुरलीधरशास्त्रिभिर्दुरधिगमतर्काध्ययनप्रणयिमृदुधी-बालजनकरुणापरवशैः, न्यायशास्त्रीयपदार्थव्युत्पादनक्षमाऽल्पाक्षरा-प्यर्थबहुला तर्कविलासिनीसमाख्या व्याख्या निरमायि या विला-सिनीव दर्शनमात्रेण कुतूहलपरवशीकृत्य विद्वज्जनमनांस्यधिरोहति ।

# प्रशस्तिपत्राणि ।

## श्रीरामचन्द्राय नमः ।

श्रीपण्डितमुरलीधरशास्त्रिकृतस्य तर्कसंग्रहव्याख्यानस्य कतिपयाः पङ्क्तयो मया श्रुताः । उत्तममस्तीदं व्याख्यानम् । लेखः प्रौढोऽस्ति इति मन्यते—

काशीस्थः शिवकुमारशर्म्ममिश्रः ।
संवत् १९७० मार्गशीर्षपौर्णमास्याम् ।

---

## श्रीश्रीविश्वनाथो विजयते ।

हैदरावादवास्तव्येनाधिगततर्काद्यनेकशास्त्रनैपुण्येन श्रीमता मुरलीधरशर्मणा विरचितां तर्कविलासिनीं नाम तर्कसंग्रहटीकामामूलमवलोकयतश्चेतो मे नितरामानन्दमेदुरं समजनि । टीकेयं भाषारचनाचातुर्येण, सरलार्थवत्तयापि दुरधिगमाखिलतर्कशास्त्रगाम्भीर्यसमन्विततया च सर्वेषामेव तर्करसिकानामतितरां मनांसि समाकर्षति, प्रथयति च टीकाकर्त्तुः सुविमलं पाण्डित्यवैभवं सहृदयधुरीणेष्विति मां प्रतिभाति । नैयायिकमतमधिजिगांसूनां बालानामप्यनया बहूपकरिष्यत इत्यहमाशासे । पल्लवितेनालमिति—

वाराणसी— राजकीयसस्कृतविद्यामन्दिरात् । } न्यायाचार्य्यो वामाचरणशर्मा ।

---

श्रीः ।

न्यायशास्त्रपरिभाषाप्रतिपित्सूनां प्रतिपत्तिसौकर्याय जागदीशी-गदाधरी-कणादसूत्र-गौतमसूत्र-प्रभृतिभ्यः द्रव्यादिपदार्थानामुद्देशलक्षणपरीक्षाद्युपन्यासपुरःसरं न्यायशास्त्रीयसिद्धान्तजातमुद्धृत्य श्रीमताऽन्नंभट्टेनोपन्यबन्धि तर्कसंग्रहः । स चायं ग्रन्थः संक्षिप्तोऽपि न्यायशास्त्रीयसारभूतार्थप्रतिपादकः कृत्स्नन्यायशास्त्रीयतात्त्विकज्ञानसंपादकश्च । परमादरपुरःसरं पण्डितानां पठनपाठनप्रभृतिव्यवहारविषयो बभूव ।

ततश्च साम्प्रतिकानां प्रतिपत्तिसौकर्याय बहवो विबुधाः स्वस्ववाग्वैभवमाविर्भावयन्तस्तत्र विविधा व्याख्या व्यरचयन् । तथाहि ग्रन्थकृदेव दीपिकानामधेयां तस्याश्चापरो नीलकण्ठनामा पण्डितस्तर्कप्रकाशाभिधां टीकां रचयामास । ततः कृष्णधूर्जटिश्चन्द्रोदयनाम्नीं पदकृत्यनामधेयां चापरस्तथा गोवर्धनसुधीर्न्यायबोधिनीं तथा स एव लघुबोधिनीञ्च प्राणायीत् । परं त्वेतैर्व्याख्यानैरपि तर्कसंग्रहग्रन्थः सुखबोध्यत्वे नोन्नतिमगमत् । किंतु दिने दिने दुर्बोध्य एव वर्धते । अतोऽधुना तर्कप्रकाश–तरङ्गिणी–मञ्जरी–मुक्तावल्यादि-विविधकालाध्ययनसाध्यज्ञानविषयीभूतानां खण्डशोऽध्ययनं विनाप्येकग्रन्थाध्ययनेन न्यायशास्त्रीयाः सर्वेऽपि विषयाः स्वल्पकालेन संविदिता भवेयुरित्येतदर्थं तर्कसंग्रहस्य तर्कविलासिनीनामधेया टीका प्राणायि पुष्करणांज्ञातीय–पण्डितमुरलीधरशास्त्रिणा । तत्रत्यविषयाणां सौष्ठवमस्तीत्यस्मिन्नर्थे करांचीस्थपाठशालामुख्याध्यापकवर्य–पण्डितशम्भुदत्तस्य संमतिरस्ति ॥

---



वेदान्तशास्त्रनिष्णात–पण्डितश्रीगिरि-
धरशास्त्री, पुष्करणा.

जन्मसं० १८९७ शक १७६२ माघकृष्ण १२
मृत्युसं० १९६२ शक १८२९ चैत्रशुक्ल ४



(वसन्ततिलका)

एकोनविंशतिशते प्रमिते च साब्दे
संवत्सरे मिथुनधाम्न्यगते च भानौ ।
आषाढशुक्लदशमीरविवासरेषु
सेयं प्रकाशमगमत्कृपया हरेर्हि ॥ १ ॥

(अनुष्टुप्)

पूज्येषु पादपद्मेषु गुरोर्गिरिधरस्य च ।
मुदार्पिता जयत्येषा टीका तर्कविलासिनी ॥ २ ॥



॥ श्रीः ॥

# श्रीमद्गिरिधराष्टकम् ।

[१]

स्रग्धरा

ध्यायामो रूपरूप्यं गिरिधरसुखदं कामकामानभिज्ञं
हैद्रावादस्थलस्थाग्रमुरलिधरपदद्वयप्रियं मानशुद्धम् ।
ध्यायामोरूपरूप्यं गिरिधरसुखदं वामकामानभिज्ञं
हैद्रावादस्थलस्थाभ्रममलिधरपदद्वयप्रियं मानशुद्धम् ॥

[२]

चिन्ताकोट्टारहट्टाघटितकटकघट्टाट्टकोट्टारपङ्के
कन्दर्पप्रांशुकोदण्डगखरखगसंस्पर्शनष्टस्वसंज्ञान् ।
भो भ्राजिष्णो च जिष्णो गिरिधर वर कष्टाब्धि नस्तारय त्वम्
दैवज्ञज्ञानसिन्धो मुरलिधरबुधज्येष्ठवन्धोऽयसिन्धो ॥

[३]

ध्वान्ताध्वान्ताध्वविज्ञं भवभयजनं पण्डितासण्डकार्यं
विद्वन्मार्तण्डचण्डं गिरिधरविजयं दानशौण्डं स्वरामम् ।
ध्वान्ताध्वान्ताध्वविज्ञं भवभरभजनं मण्डिताखण्डकार्यं
विद्वन्मार्तण्डचण्डं गिरि धरणिजयं दानशौण्डं स्वरामः ॥

[ ४ ]

ब्रह्माण्डेऽस्मिन्नकाण्डे गिरिधर भवतां ज्ञानविज्ञानभावं
श्रौतौघस्मार्तशास्त्रप्रथमबहुलविद्यासु विद्वद्वरिष्ठाः ।
ज्ञातुं तेऽप्यासमर्था वयमिह हि जडा ज्ञानविज्ञानहीनाः
जानीमोऽतः कथं तं कुरु सदय कृपां त्वं पृथुं सैन्धवेषु ॥

[ ५ ]

व्यासाशेषाणि सूत्राणि गिरिधरमुखस्थानलब्धानि यानि
शास्त्रादौ पाणिनीयानि गिरिधर च कैर्भावितानि स्व राम ।
व्यासाशेषाणि सूत्राणि गिरिधरमुखस्थानलब्धा नयानि-
शास्त्रातो पालनीया नु गिरिधर च कैर्भाविता वः स्मरामः ॥

[ ६ ]

ज्योतिःशास्त्रार्थविद्यागुणगणपणवित्पण्डितंमन्यमर्त्या-
हं पाण्डित्याग्रगण्यप्रकटितमदद्न्तावलोत्फुल्लसिंहः ।
भूयादाशुप्रसन्नो गिरिधरवरदो दीनदुःखार्तिहारी
सिन्धौ ये चासमर्थाः कलुषकलुषिता ज्ञानवाहा हि तेषु॥

[ ७ ]

हैद्राबादस्थविद्याः परिमलसरलामोददा नित्यजाहि
वैद्या वेद्याः सदा भो गिरिधरचरणाम्भोरुहाणि स्मरन्ति ।
हैद्राबादस्थविद्यापरिमलसरलामोददानि त्वमूनि
विद्यावेद्याः सदाभो गिरिधरचरणाम्भोरुहाणि स्मरामः ॥

[८]

पूज्येभ्येभ्यो गुरुभ्यो गिरिधरवरसद्भ्योऽमलेभ्यो वरेभ्यो
विद्वद्भ्यो धीरविद्भ्यो मुरलिधरबुधप्राप्यजेभ्यो जयिभ्यः ।
ज्ञातृभ्यो ज्ञातिविद्भ्यो विकसितनलिनौघास्यभेभ्यो धनिभ्यः
कान्तेभ्यो नो भवद्भ्योस्तु गिरिधर नमः स्याद्धि भक्तिर्भवत्सु॥

इति श्रीकाशीनिवासिपण्डित–पाण्डुरङ्गाचार्यसुत–वासुदेवशास्त्रिविरचितं
श्रीमद्गिरिधराष्टक संपूर्णम् ।





पण्डित मुरलीधर शास्त्री, पुष्करणा.

जन्म संवत् १९२४ फाल्गुनशुक्ल १४ चतुर्दश्यां जातो.

# तर्कसंग्रहः

## तर्कविलासिनीटीकासहितः ।

---

॥ श्रीकृष्णाय नमः ॥

निधाय हृदि विश्वेशं विधाय गुरुवन्दनम् ।
बालानां सुखबोधाय क्रियते तर्कसंग्रहः ॥ १ ॥

---

किशोरीरमणं वन्दे गौरीरमणवन्दितम् ।
यत्कृपालवतोप्यज्ञा वाञ्छितं फलमाप्नुयुः ॥ १ ॥

ाचार्यं च महाप्रभुं सहगणं श्रीविट्ठलेशं प्रभुं
नत्वा श्रीमुकवीन्द्रवन्दितपदं गोवर्द्धनं ज्ञानदम् ।
हं विदुषां प्रमोदनकरीं बालार्थसंसिद्धये
टीकां तर्कविलासिनीं वरगुणां कृष्णस्तया तुष्यताम् ॥ २ ॥

व्याकरणविदो वन्द्यान् ज्योतिर्विद्याविशारदान् ।
गुरून्गिरिधरान्वन्दे शुद्धाद्वैतपरायणान् ॥ ३ ॥

प्रेमचन्द्राभिधं तातं वन्देऽहं सुखदायकम् ।
यतो जन्म समासाद्य कृतो हि सत्समागमः ॥ ४ ॥

# तर्कसंग्रहः

## तर्कविलासिनीटीकासहितः ।

---

॥ श्रीकृष्णाय नमः ॥

निधाय हृदि विश्वेशं विधाय गुरुवन्दनम् ।
बालानां सुखबोधाय क्रियते तर्कसंग्रहः ॥ १ ॥

---

किशोरीरमणं वन्दे गौरीरमणवन्दितम् ।
यत्कृपालवतोप्यज्ञा वाञ्छितं फलमाप्नुयुः ॥ १ ॥

आचार्यं च महाप्रभुं सहगणं श्रीविट्ठलेशं प्रभुं
नत्वा श्रीसुकवीन्द्रवन्दितपदं गोवर्द्धनं ज्ञानदम् ।
कुर्वेऽहं विदुषां प्रमोदनकरीं बालार्थसंसिद्धये
टीकां तर्कविलासिनीं वरगुणां कृष्णस्तया तुष्यताम् ॥ २ ॥

व्याकरणविदो वन्द्यान् ज्योतिर्विद्याविशारदान् ।
गुरूनिगिरिधरान्वन्दे शुद्धाद्वैतपरायणान् ॥ ३ ॥

प्रेमचन्द्राभिधं तातं वन्देऽहं सुखदायकम् ।
यतो जन्म समासाद्य कृतो हि सत्समागमः ॥ ४ ॥

श्रीः । प्रारिप्सितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्तिकामस्तार्किकशिरोमणिः श्रीमानन्नंभट्टः शिष्टाचारानुमितश्रुतिविहितं मङ्गलं निर्माय प्रेक्षावत्प्रवृत्त्यङ्गभूतमनुबन्धचतुष्टयं[1] च संदर्शयन् सच्छात्रावधानाय

---

१ अनुबध्नन्ति पुरुषं स्वविषयकज्ञानद्वारा प्रवर्तयन्ति तेऽनुबन्धाः । विषयसम्बन्धप्रयोजनाधिकारिणः ।

व्यापारोऽङ्गीकर्तव्यः । ततश्च लोके व्यापाराल्पत्वे कार्याल्पत्वस्य दृष्टत्वात्तद्दृष्टान्तेनात्रापि कादम्बर्यादेरसंपूर्णत्वेन व्यापाराल्पत्वमनुमाय तेन च व्यापारिणो मङ्गलस्याप्यल्पत्वमनुमातुमुचितम् । एवं च मङ्गलाल्पत्वात्समाप्त्यभावसिद्धौ समाप्तिविघ्नान्यूनसंख्याकमङ्गलयोरेव कार्यकारणभावः फलितः । इत्थं च कादम्बर्यादौ विघ्नान्यूनसंख्याकमङ्गलाभावान्नान्वयव्यभिचारः । किरणावल्यादौ तु समाप्त्यनुरोधाद्बहिरेव मङ्गलं प्रकल्प्य व्यतिरेकव्यभिचारोऽपि निरसनीयः । नच तत्कर्तुर्नास्तिकत्वान्न ग्रन्थाद्बहिरपि मङ्गलाचरणसंभव इति वाच्यम् । बहिरित्यस्य जन्मान्तरे इत्यर्थकत्वात् । एवमुभयविधव्यभिचारनिरसनेन सूपपादावन्वयव्यतिरेकसहचारौ ।

नव्यास्तु जन्मान्तरीयसमाप्तिमुद्दिश्य शिष्टैर्मङ्गलाचरणादर्शनाच्छरीरनिष्ठैव प्रत्यासत्तिरनयोः कार्यकारणभावावच्छेदिका वक्तव्या ।

---

१ नचात्र जन्मभेदाद्वैयधिकरण्यं शङ्कनीयम् । आत्मनिष्ठप्रत्यासत्त्या कार्यकारणभावाङ्गीकारात् । सा च स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्तासम्बन्धेन चरमवर्णध्वंसरूपसमाप्तिं प्रति मङ्गलस्य स्वानुकूलकृतिमत्तारूपा । उक्तपरंपरासम्बन्धाभ्यां समाप्तिमङ्गलयोरात्मनिष्ठत्वात् । सर्वत्र परंपरासम्बन्धघटकस्वपदेन सम्बन्धप्रतियोगी धर्तव्यः । यस्य सम्बन्धो विवक्षितः स प्रतियोगी, यस्मिन्विवक्षितः सोऽनुयोगी । यथा प्रकृते समाप्तिमङ्गलयोरात्मनि सम्बन्धो विवक्षित इति ते (समाप्तिमङ्गले) प्रतियोगिनी आत्मानुयोगी । अत प्रथमसम्बन्धे स्वपदेन चरमवर्णध्वंसस्य ग्रहणं, द्वितीये मङ्गलस्येति ।

२ अलौकिकं कर्म त्रिविधम्—ऐहलौकिकफलं, पारलौकिकफलम्, ऐहिकपारत्रिकसाधारणफलं चेति । तत्र कारीर्यादिकमैहलौकिकफलम् । लोकोऽत्र देहः येन देहेन कारीरीष्टिः कृता तेनैव देहेन भोग्यफलकमित्यर्थः । तस्याः तदानीं शुष्यत्सस्योज्जीवनफलकवृष्ट्युद्देशेन विधानात् । नहि यजमानस्य जन्मान्तरे जायमाना वृष्टिर्यागकालिकशुष्यत्सस्योज्जीवनायालमिति । ज्योतिष्टोमादिकं पारलौकिकं 'यन्न दुःखेन संभिन्नं नच ग्रस्तमनन्तरम् । सकल्पोपनतं चैव तत्सुखं स्वःपदास्पदम्' इतिलक्षितं स्वर्गापरपर्यायं सुखमुद्दिश्य ज्योतिष्टोमविधानात् । तस्य च मानुषशरीरेण भोक्तुमनर्हत्वात् । व्यामिश्रकर्माधीनत्वान्मानुषदेहोपजनस्य । किंतु यजमानशरीरपातानन्तरं धर्मसहकृततैजसादिपरमाणुभिरारब्धदिव्यशरीरभेदमा

सा च स्वप्रतियोगिचरमवर्णावच्छेदकतासंबन्धेन चरमवर्णध्वंसरूपसमाप्तिं प्रति मङ्गलस्य स्वोत्पत्त्यवच्छेदकजातीयतावत्त्वरूपा । तथाच नास्तिकस्यैतस्मिञ्जन्मनि मङ्गलाचरणासंभवाद् व्यतिरेकव्यभिचारस्तदवस्थ एवेति न समाप्तिर्मङ्गलस्य फलम् । नचोक्तश्रुतिविरोधः । दर्शितबाधकसद्भावात्समाप्त्यंशपरिहारेण तस्याः कल्पनीयत्वात् । अतो विघ्नध्वंस एव मङ्गलस्य फलम् । समाप्तिस्तु प्रतिबन्धकाभावघटितप्रतिभादिकारणकलापात् । विघ्नध्वंसस्य समाप्तिहेतुत्वं च प्रतिबन्धकसंसर्गाभावत्वेन नतु तद्ध्वंसत्वेन । तेन स्वतःसिद्धविघ्नविरहवता मङ्गलानाचरणेऽपि न क्षतिरित्याहुरिति सक्षेपः ।

निरूप्यं प्रतिजानीते—क्रियते तर्कसंग्रह इति । तर्क्यन्ते यथार्थज्ञानविषयीक्रियन्ते इति तर्काः द्रव्यादयः सप्तपदार्थाः तेषां संग्रहः सक्षेपेण स्वरूपकथनम् । एतेन विषयोऽपि दर्शितः । ननु सुविस्तराणामन्येषां तर्कग्रन्थानां सत्त्वादलं ग्रन्थान्तरकरणाया-

---

स्याय यजमानात्मना भोग्यफलत्वात् । पुत्रकामेष्टिशुद्धियागसाग्रहण्येष्ट्यादिकं तु पुत्रपशुग्रामादिकामं प्रति विहितत्वात् वर्तमानशरीराविरोधेनापि यजमानेनासति प्रतिबन्धके तादृशफलस्य प्राप्तुं शक्यत्वात्सति तु प्रतिबन्धके जन्मान्तरे तत्प्राप्तेरैहिकपारत्रिकसाधारणफलकम् । तदेतत्त्रिविधेषु कर्मसु मध्ये मङ्गलमैहलौकिकफलं कर्म प्रारिप्सितसमाप्त्युद्देशेनैव शिष्टैस्तदाचरणात् शुष्यत्सस्योज्जीवनकामै कारीर्यादिवत् जीवच्छरीराविरोधेनारोग्यकामैर्महामृत्युंजयजपादिवच्चेति । तस्मादात्मनिष्ठप्रत्यासत्त्या समाप्तिमङ्गलयोः कार्यकारणभावोऽनुचित जन्मान्तरीयसमाप्तिमुद्दिश्यापि तत्करणप्रसङ्गात् ।

१ अत्र स्वं चरमवर्णध्वंसः तस्य प्रतियोगी चरमवर्णं तदवच्छेदकं यच्छरीरावयवकण्ठादिषु तादृशवर्णनिमित्तकारणीभूतान्तर्मारुताभिघाताख्यः संयोगस्तच्छरीरं तत्त्वं तच्छरीरे ।

२ मङ्गलस्य ज्ञानरूपत्वात् तदुत्पत्तिर्यस्मिन्नात्मनि भवति तस्यात्मनो यदवच्छेदकं तदेव तन्मङ्गलोत्पत्तेरप्यवच्छेदकं तज्जातीयत्वं च चैत्रत्वमैत्रत्वादिना । चैत्रादिशरीरस्याप्यवयवोपचयापचयाभ्यामुत्पादविनाशशालित्वेन नानात्वादाकाशत्वादेरिवाश्रयव्यक्तेरेकत्वात्कथं चैत्रत्वादेर्जातित्वमिति शङ्कानवकाशः ।

**रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागप-
रत्वापरत्वगुरुत्वद्रवत्वस्नेहशब्दबुद्धिसुखदुःखेच्छाद्वेषप्र-
यत्नधर्माधर्मसंस्काराश्चतुर्विंशतिर्गुणाः ॥**

गुणान् विभजते—रूपरसेत्यादिना । द्रव्यमात्रवृत्तित्वं द्रव्यकर्मा-न्यत्वविशिष्टजातिमत्त्वं वा गुणसामान्यलक्षणं बोध्यम्, अत्रापि संख्यादिग्रहणप्रयोजनं पूर्ववद्बोध्यम्, एवमुत्तरत्रापि ॥

**उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानि पञ्च कर्माणि ।**

कर्माणि विभजते—उत्क्षेपणेति । संयोगविभागयोरनपेक्षकारणत्वं कर्म सामान्यलक्षणम् । न च भ्रमणरेचनस्पन्दनोर्ध्वज्वलनतिर्यग्गम-नादीनां कर्मणां सत्त्वात् पञ्चेति विभागोऽनुपपन्न इति वाच्यं, तेषां गमनेऽन्तर्भावात् । ननूत्क्षेपणादीनामपि गमनेऽन्तर्भावसंभवात् तेषां कथं पृथक्त्वेन कथनमिति चेन्न, स्वतन्त्रेच्छस्य नियोगपर्यनुयोगानर्हस्य मुनेः संमतत्वात् ।

**परमपरं चेति द्विविधं सामान्यम् ॥**

सामान्यविभागं दर्शयति—परमपरं चेति । सामान्यलक्षणं तु नित्यत्वे सत्यनेकसमवेतत्वम् । संयोगादावतिव्याप्तिवार-णाय नित्यत्वे सतीति । यावन्मात्रोक्तावाकाशादावतिव्याप्तिरतो विशेष्योपादानम् । नित्यत्वे सति समवेतत्वमित्युक्तावाकाशा-दिनित्यसमवेतसंख्यादावतिव्याप्तिरतोऽनेकेति । अनेकसमवेतत्वं विहायानेकवृत्तित्वमात्रोक्तौ अत्यन्ताभावस्यापि नित्यत्वादनेकवृत्ति-त्वाच्च तत्रातिव्याप्तिरिति अनेकसमवेतत्वमिति । परत्वम् अधिक-देशवृत्तित्वं, न्यूनदेशवृत्तित्वमपरत्वम् । तत्र द्रव्यादित्रिकवर्तिनी काचिज्जातिः सत्ता यद्बलात् तत्र सत्सदित्यनुगतप्रतीतिर्भवति सा परा, तद्भिन्ना द्रव्यत्वादयः सर्वा अपराः सत्तापेक्षया न्यूनदेशवृत्ति-त्वात् । नीलपीतादिविभिन्नरूपासु विभिन्नदेशकालस्थितासु नाना-

व्यक्तिषु घटोऽयं घटोऽयमित्यनुगतप्रतीतिव्यवहारयोरनुगतविषयं विनाऽसंभवाज्जातिकल्पनम् । अत्र इतिपदस्य स्वसमभिव्याहृतपदार्थतावच्छेदकपरत्वात्परत्वापरत्वरूपद्विप्रकारवत्सामान्यमिति वाक्यार्थः ।

**नित्यद्रव्यवृत्तयो विशेषास्त्वनन्ता एव ।**

विशेषं विभजते—**नित्यद्रव्यवृत्तय इति** । नित्यद्रव्याणि पृथिव्यादिचतुष्टयस्य परमाणवः आकाशादिपञ्चकं च तेषामानन्त्यात् तद्वृत्तयो विशेषा अपि अनन्तसंख्याका इत्यर्थः । द्व्यणुकपर्यन्तानां पृथिव्यादीनामवयविनां व्यावर्त्तकास्तत्तदवयवाः अनवयविनां तु परमाण्वादिनित्यद्रव्याणां परस्परं भेदको विशेष एव । ननु तत्तत्परमाणुगतैतत्त्वादिनैव परमाणूनां परस्परं भेदसिद्धेर्विशेषो नाङ्गीकार्य इति चेन्न । परमाणौ भेदसिद्धिं विना तद्वृत्तैतत्त्वस्य दुर्वचत्वात् । नव्यास्तु विशेषपदार्थानामिव परमाणूनां स्वतोव्यावर्त्तकत्वमङ्गीकृत्य विशेषे मानाभाव इत्याहुः । केचित्तु शब्दसमवायिकारणतावच्छेदकतयापि विशेषपदार्थः सिध्यतीत्याहुः ।

**समवायस्त्वेक एव ।**

समवायस्य विभागाभावं द्योतयितुं तस्यैकत्वमाह—**समवायस्त्विवति** । समवायो नित्यसंबन्धस्तथा च नित्यसंबन्धत्वं समवायलक्षणम् । संयोगादिवारणाय नित्येति । आत्मादावतिव्याप्तिवारणाय संबन्धेति । संबन्धत्वं च संबन्धिभिन्नत्वे सति संबन्ध्याश्रितत्वं स्वभिन्नसंबन्ध्याश्रितत्वं वा । नचाधिकरणस्वरूपस्याभावप्रतियोगिकसंबन्धस्य स्वभिन्नसंबन्ध्यभावात्तत्राव्याप्तिरिति वाच्यं, तस्य मुख्यसंबन्धत्वास्वीकारात्समवायसंयोगयोरेव मुख्यसंबन्धत्वेन प्रकृतलक्षणलक्ष्यत्वात् । ननु समवायस्य सद्भावे किं प्रमाणमिति चेदत्र नव्याः-विशिष्टबुद्धित्वावच्छिन्नं प्रति विशेषणज्ञानस्य हेतुत्वात् यद्विशिष्टज्ञानं तत्प्रकारविशेष्यसंसर्गविषयकमेवेति नियमेन गन्धवती

पृथिवीति विशिष्टज्ञानं विशेषणविशेष्योभयसंसर्गविषयकं विशिष्टज्ञानत्वात् घटवद्भूतलमिति विशिष्टज्ञानवदित्यनुमानेन संसर्गविषयकत्वसिद्धौ, द्रव्ययोरेव संयोगात् प्रकृते च विशेषणीभूतस्य गन्धस्याद्रव्यत्वेन संयोगबाधात्समवायसिद्धिरित्युचरयन्ति । केचित्तु तादात्म्यसंबन्धावच्छिन्नकपालत्वावच्छिन्नकारणतानिरूपिता या घटत्वावच्छिन्ना कार्यता सा किञ्चित्संबन्धावच्छिन्ना कार्यतात्वात् दण्डत्वावच्छिन्नकारणतानिरूपितघटत्वावच्छिन्नकार्यतावदित्यनुमानेन संबन्धसिद्धौ युतसिद्धयोरेव संयोगादयुतसिद्धयोस्तदतिरिक्तसमवायसिद्धिः। नच तत्र स्वरूप एव कल्प्यतामिति वाच्यम्, सिद्धसाधनापातादनन्तस्वरूपाणां संबन्धत्वकल्पने गौरवाच्चेत्याहुः । यत्त्विह तन्तौ पटसमवाय इति प्रत्यक्षेणैव समवायसिद्धिरिति तन्न, संबन्धप्रत्यक्षत्वावच्छिन्नं प्रति यावदाश्रयप्रत्यक्षस्य कारणत्वेन परमाण्वनुयोगिकपरमाणुत्वप्रतियोगिकसमवायाश्रयीभूतपरमाणुप्रत्यक्षाभावेन समवाये प्रत्यक्षप्रमाणाभावात् । नच समवायस्यैकत्वे स्पर्शसमवायस्य रूपसमवायस्य चैक्येन वायौ रूपसमवायसत्त्वाद्रूपवत्ताप्रतीतिः स्यादिति वाच्यम् । तत्–तत्संबन्धोभयसत्ताया एव तद्वत्ताप्रतीतिहेतुत्वात् । नन्वेकत्वं कथं विभागप्रतिबन्धकमिति चेच्छृणु । विभागो हि सामान्यधर्मसाक्षाद्न्यूनवृत्तियावद्धर्मप्रकारकज्ञानानुकूलो व्यापारः तथा च द्रव्यत्वादीनां साक्षान्न्यूनवृत्तिपृथिवीत्वजलत्वतेजस्त्वादिधर्मसत्त्वाद्द्रव्यादीनां विभागः सिद्धः, अत्र तु समवायत्वन्यूनवृत्तिधर्माभावान्न तद्विभाग इति ।

अभावश्चतुर्विधः । प्रागभावः प्रध्वंसाभावोऽत्यन्ताभावोऽन्योन्याभावश्चेति ॥ इत्युद्देशग्रन्थः ।

अभावं विभजते—अभाव इति । प्रागभावत्वादिरूपचतुःप्रकारवानभाव इति समुदायार्थः । अभावत्वं तु भावभिन्नत्वं,

प्रतियोगिज्ञानाधीनज्ञानविषयत्वं वा । अखण्डोपाधिरित्यपि केचित् । भावत्वं च द्रव्यादिषट्कान्यतमत्वं, समवायैकार्थसमवायान्यतरसंबन्धेन सत्तावत्त्वं वा । तथाच द्रव्यादित्रिके समवायेन सामान्यादौ च एकार्थीभूतद्रव्यसमवायेन सत्तावत्त्वाल्लक्षणसमन्वयः[1] ।

तत्र गन्धवती पृथ्वी ।

तत्रोद्दिष्टक्रमानुरोधेन प्रथमं पृथिव्या लक्षणमाह---तत्र गन्धवतीति । गन्धवतीति गन्धोऽस्यास्ति इति गन्धवान् स्त्रीत्वविवक्षायां उगितश्चेति ङीप् । तथाच गन्धवत्त्वं पृथिव्या लक्षणम् । गन्धवतीत्यस्येयानर्थः कथं निःसरति इति चेत्---गन्धवतीतिभावप्रधानो निर्देशः पृथिवीत्यस्य षष्ठ्या विपरिणामो लक्षणपदाध्याहारश्चेति अस्य वाक्यस्य लक्षणपरत्वेन तात्पर्यानुपपत्त्या कल्पनात् । ननु कालादावपि कालिकादिसंबन्धेन गन्धसत्त्वादतिव्याप्तिरितिचेन्न । समवायसंबन्धेन गन्धवत्त्वस्य विवक्षितत्वात् । अत्र पृथिवी लक्ष्या पृथिवीत्वं लक्ष्यतावच्छेदकं गन्धवत्त्वं लक्षणम् । तथाच लक्ष्यलक्ष्यतावच्छेदकलक्षणैतत्त्रितयावगाहित्वादस्य लक्षणशास्त्रत्वम् । ननु पाषाणादौ गन्धोपलब्ध्यभावाज्जलादौ च तदुपलब्धिसंभवादव्याप्त्यतिव्याप्ती इतिचेन्न । उत्कटत्वानुत्कटत्वाभ्यामुपलब्ध्यनुपलब्धिदर्शनात् पाषाणादावनुत्कटत्वादनुपलब्धिः । जलादौ तु स्वाश्रयसंयोगेन गन्धोपलम्भो न समवायेनेति न दोषः । ननु लक्षणस्य किं प्रयोजनमितिचेच्छृणु व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनमिति । तत्र व्यावृत्तिरितरभेदानुमितिः । पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वा-

---

[1] नचात्र समवायेऽव्याप्तिः । एकार्थसमवायेत्यस्य समवायघटितसामानाधिकरण्येनेत्यर्थकत्वात् । नहि समवायेन सत्ताधिकरणे द्रव्यादौ समवायेन समवायवत्त्वं, समवायस्य समवायेनावृत्तित्वादिति वाच्यम् । एकार्थसमवायेत्यनेन स्वसमवायिसमवायवत्त्वस्य विवक्षितत्वात् । समवायवत्त्वं च स्वप्रतियोगित्वस्वतादात्म्यान्यतरसंबन्धेन । तेन समवाये समवायस्य तादात्म्यसंबन्धेन सत्त्वान्न कापि क्षतिरिति भावः ।

दित्यादिना पृथिव्यामितरभेदसिद्धिः। व्यवहारस्तु गन्धज्ञानेन पृथिवीत्वव्यञ्जने इयं पृथिवीति शब्दप्रयोगरूपः। नच सुरभ्यसुरभिकपालारब्धघटे उक्तलक्षणाव्याप्तिः, तत्र परस्परप्रतिबन्धेन कस्यापि गन्धस्यानुत्पादाच्चित्रगन्धानङ्गीकाराच्चेति वाच्यम्। गन्धसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्। अत्र गन्धाधिकरणत्वं तद्वृत्तित्वं च समवायसंबन्धेन विवक्षणीयम्। तेन न कालिकादिसंबन्धेन गन्धाधिकरणजलादिवृत्तिद्रव्यत्वव्याप्यजलत्वादिजातिमादाय नवा समवायेन गन्धाधिकरणपृथिवीनिरूपितकालिकसंबन्धावच्छिन्नवृत्तितावद्द्रव्यत्वव्याप्यजलत्वादिमत्त्वमादाय जलादावतिव्याप्तिः। सत्तामादाय जलादावतिव्याप्तिवारणाय द्रव्यत्वव्याप्येति। जात्युपादानाच्च न गन्धाधिकरणनिरूपितवृत्तित्ववतो द्रव्यत्वव्याप्यजलपृथिव्यन्यतरत्वादिधर्मवत्त्वस्य जलादौ सत्त्वेऽप्यतिव्याप्तिः। यत्तु कालिकसंबन्धेन कालादावतिव्याप्तिवारणाय सर्वाधारताप्रयोजकसंबन्धभिन्नसंबन्धेन गन्धवत्त्वं विवक्षितमिति तत्तुच्छम्। सर्वाधारताप्रयोजकसंबन्धभिन्नतादात्म्यादिसंबन्धेन गन्धवत्त्वस्य गन्धे सत्त्वादतिव्याप्त्यापत्तेरिति दिक्।

सा द्विविधा। नित्याऽनित्या च। नित्या परमाणुरूपा। अनित्या कार्यरूपा। पुनस्त्रिविधा शरीरेन्द्रियविषयभेदात्। शरीरमस्मदादीनाम्। इन्द्रियं गन्धग्राहकं घ्राणं नासाग्रवर्ति। विषयो मृत्पाषाणादिः।

पृथिवीं विभजते—सेति। अत्रापि नित्यत्वानित्यत्वाभिन्नद्वित्वसंख्याविशिष्टविभाजकधर्मान्यतरवती पृथिवीत्यर्थः। एवं जलादिविभाजकवाक्येऽपि स्वयमूह्यम्। द्विविधत्वमेव दर्शयति—नित्येति। नित्यत्वं च ध्वंसभिन्नत्वे सति ध्वंसाप्रतियोगित्वम्। ध्वंसेऽतिव्याप्तिवारणाय भिन्नान्तं, घटादावतिव्याप्तिवारणाय

विशेष्यदलम् । तद्भिन्नमनित्यत्वम् । अथ परमाणुसाधनप्रक्रिया । जालसूर्यमरीचिस्थं सूक्ष्मतमं यद्रजः उपलभ्यते स त्रसरेणुः सावयवः, चाक्षुपद्रव्यत्वाद्धटवदित्यनुमानेन त्रसरेण्ववयवः सिद्धः, यस्त्रसरेण्ववयवः सोऽपि सावयवः, चाक्षुपद्रव्यारम्भकत्वान्महदारम्भकत्वाद्वा कपालवदित्यनुमानेन द्व्यणुकावयवः सिद्धः स एव परमाणुः, तस्याप्यवयवस्वीकारेऽनवस्थाप्रसङ्गात् । तदुक्तं—'जालसूर्यमरीचिस्थं यत्सूक्ष्मं दृश्यते रजः । तस्य षष्ठतमो भागः परमाणुः स उच्यते ॥' इति । **कार्यरूपेति** । द्व्यणुकादिघटादिपर्यन्तेत्यर्थः । कार्यरूपां पृथिवीं विभजते—**पुनरिति** । ता एव विधा दर्शयति—**शरीरेत्यादिना** । द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसंबध्यत इति नियमाद् भेदशब्दस्य प्रत्येकमन्वयः । भेदपदेन स्वसमभिव्याहृतपदार्थतावच्छेदकीभूतशरीरत्वादिधर्मो लक्ष्यते, पञ्चम्यर्थः प्रयुक्तत्वं, तथाच शरीरत्वेन्द्रियत्वविषयत्वप्रयुक्तत्रित्वसङ्ख्यावती कार्यरूपा पृथिवीत्यर्थः ॥ शरीरं दर्शयति—**शरीरमिति** । अन्त्यावयवित्वे सति चेष्टाश्रयत्वं शरीरत्वम् । अस्मदादीनामित्यादिपदेन पशुपक्षिसरीसृपादयो गृह्यन्ते । तत्र शरीरं द्विविधं योनिजमयोनिजं चेति । तत्र योनिजमपि द्विविधं—जरायुजमण्डजं चेति । गर्भवेष्टनचर्मपुटकं जरायुः । ततो जातं जरायुजमस्मदादीनाम्, अण्डजं पक्षिसर्पादीनाम् । अयोनिजमपि त्रिविधं—स्वेदजमुद्भिज्जमदृष्टविशेषजं चेति । तत्र—स्वेदजं कृमिदंशादीनाम् । तदुत्पत्तिस्त्वधर्मसहकृताणुभ्य एव जायते इति भावः । उद्भिज्जं तरुगुल्मादीनाम् । अदृष्टविशेषजन्यं धृष्टद्युम्नादीनाम् । रूपादिद्रवान्तास्त्रयोदश संस्कारश्चैते चतुर्दश गुणाः पृथिव्याम् । इन्द्रियं दर्शयति—**इन्द्रियमिति** । इन्द्रियत्वं च शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वम् । तथाच शब्देतरे ये उद्भूतविशेषगुणाः घटनिष्ठरूपादयस्तदनाश्रयत्वं, ज्ञानस्य का-

रणीभूतो यो मनःसंयोगः इन्द्रियमनःसंयोगस्तदाश्रयत्वं च चक्षुरादावस्ति, आत्मा मनसा संयुज्यते मनः इन्द्रियेण इन्द्रियमर्थेन ततः प्रत्यक्षमिति नियमादिति लक्षणसमन्वयः । गन्धग्राहकमिति । पार्थिवत्वे सति गन्धविषयकप्रत्यक्षजनकत्वं पार्थिवेन्द्रियस्य लक्षणम् । मनस्यतिव्याप्तिवारणाय सत्यन्तं, शरीरादावतिव्याप्तिवारणाय विशेष्यदलम् । घ्राणमिति संज्ञा । नासाग्रवर्तीत्याश्रयोक्तिः ।

वायोर्नवाष्टादश तेजसो गुणा,
जलक्षितिप्राणभृतां चतुर्दश ।
दिक्कालयोः पञ्च षडेव चाम्बरे
महेश्वरेऽष्टौ मनसस्तथैव च ॥ इति ।

विषयेति । शरीरेन्द्रियभिन्नत्वे सति भोगसाधनत्वं विषयत्वम् । भोगसाधनत्वं च अदृष्टजन्यत्वात् साक्षात् परंपरया वा द्व्यणुकप्रभृतीनां सर्वेषामेव, यत्र कार्यं यददृष्टाधीनं तत्तदुपभोगं साक्षात्परंपरया वा जनयतीति नियमात् । ननु घ्राणस्य पार्थिवत्वे किं मानमितिचेन्न । घ्राणं पार्थिवं रूपादिचतुष्टया[1]ग्राहकत्वे सति गन्धग्राहकत्वादित्यनुमानस्यैव प्रमाणत्वात् । आत्मनि व्यभिचारवारणाय सत्यन्तं, जलादौ व्यभिचारवारणाय विशेष्यदलम् । एवमग्रेपि बोध्यमित्यलं पल्लवितेन ।

**शीतस्पर्शवत्य आपः ।**

अपो निरूपयति—शीतस्पर्शेति । शीतस्पर्शवत्त्वमपां लक्षणम्[3] ।

---

१ रूपादिचतुष्टयं रूपरसस्पर्शशब्दाः ।

२ अत्र यत्र पार्थिवेन्द्रियं न तद्रूपादिचतुष्टयाग्राहकत्वे सति गन्धग्राहकं यथा चक्षुरिति व्यतिरेकोदाहरणं बोध्यम् ।

३ असाधारणधर्मो लक्षणम् । असाधारणत्वं च दूषणत्रयरहितत्वम् । दूषणत्रयं अव्याप्तिरतिव्याप्तिरसंभवश्चेति । तत्र अव्याप्तिर्नाम लक्ष्यैकदेशावृत्तित्वम् । यथा गोः कपिलत्वम् । तद्धि लक्ष्यैकदेशे लक्ष्यतावच्छेदकाश्रयीभूतकपिलभिन्ने

शीतस्पर्शसमवायिकारणतावच्छेदकतया जलत्वजातिसिद्धिः । नच शीतस्पर्शसमवायिकारणत्वं जन्यजल एवास्तीति तदवच्छेदकतया जन्यजलत्वजातिसिद्धिर्भवतु नाम न तेन परमाणुसाधारणशुद्ध-जलत्वजातिसिद्धिरिति वाच्यं, जन्यजलत्वावच्छिन्नजन्यतानिरूपित-जनकतावच्छेदकतयैव शुद्धजलत्वजातिसिद्धेः । नचैवमपि चरमावय-विनि जलेऽव्याप्तिः, तस्य जलान्तरं प्रत्यजनकत्वात्, जनकत्वे च चरमावयवित्वव्याघातादिति वाच्यम् । जलस्य जलान्तरसंयोगेन जलान्तरोत्पादकतया जलचरमावयविनोऽनङ्गीकारात् । केचित्तु घटा-दिकारणतायाः स्वरूपयोग्यतारूपायाः अरण्यस्थदण्डादाविव, स्वरू-पयोग्यतारूपायाः शीतस्पर्शसमवायिकारणताया नित्यजलेऽपि सत्त्वेन तदवच्छेदकतयैव जलत्वजातिसिद्धिरिति संजगदुः । ननु शीत-स्पर्शवत्त्वस्य वाय्वादौ सत्त्वेन जले च क्वचिदसत्त्वेनातिव्याप्त्यव्याप्ती इतिचेन्न । शीतस्पर्शसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वस्य विव-क्षितत्वात् । शीतकाले वाय्वादौ शीतस्पर्शस्तु जलोपाधिक एव, अन्यथा सर्वदैव तद्भानापत्तेरिति ध्येयम् ।

**ता द्विविधाः । नित्या अनित्याश्च । नित्याः परमाणु-रूपाः । अनित्याः कार्यरूपाः । पुनस्त्रिविधाः शरीरेन्द्रियविष-**

---

शुक्लाया गवि नास्तीत्यव्याप्तमित्युच्यते । अतिव्याप्तिर्नाम अलक्ष्ये लक्षणसत्त्वम् । यथा गोः शृङ्गित्वम् । तद्धि लक्ष्यभूतगोभिन्नमहिष्यादावस्तीत्यतिव्याप्तमित्युच्यते । असंभवो नाम लक्ष्यमात्रे कुत्रापि लक्षणासत्त्वम् । यथा गोरेकशफवत्त्वम् । गोसामान्यस्य द्विशफवत्त्वेन एकशफवत्त्वस्य कुत्रापि गव्यभावादेकशफवत्त्वमसं-भूतमित्युच्यते । एतानि दूषणरहितत्वाभावान्न गोर्लक्षणानि । किंतु सास्नादि-मत्त्वे सति शृङ्गित्वमुक्तदूषणत्रयरहितत्वाद्गोर्लक्षणं भवति । एवमन्यत्राप्यूह्यम् ।

१ कारणता द्विविधा—स्वरूपयोग्यतारूपा फलोपधायकता चेति । तत्र कार्याव्यवहितनियतपूर्ववर्तितावच्छेदकधर्मवत्त्वं स्वरूपयोग्यत्वम्, स्वाव्यवहितनि-यतपूर्ववृत्तित्वसंबन्धेन कार्यविशिष्टत्वं फलोपधायकत्वम् । स्वं कार्यम् ।

२ उत्पन्नविनष्टे इत्यर्थः ।

**यभेदात् । शरीरं वरुणलोके । इन्द्रियं रसग्राहकं रसनं जिह्वाग्रवर्ति । विषयः सरित्समुद्रादिः ॥**

अपो विभजते—**ता द्विविधा** इति । अत्रापि नित्यत्वानित्यत्वाभिन्नद्वित्वसंख्याविशिष्टविभाजकधर्मान्यतरवत्य आप इति वाक्यार्थः । नच संख्याविशिष्टविभाजकधर्मयोर्नित्यत्वानित्यत्वयोश्चाभेदः कथं भासत इति वाच्यम्, उद्देश्यविधेयभावस्थले उद्देश्यतावच्छेदकसंबन्धोऽपि विधेये भासत इति नियमात् तादृशाभेदान्वयबोधस्य व्युत्पत्तिसिद्धत्वात् । अनित्या अपो विभजते—**पुनरिति** । जलीयशरीरमयोनिजम् । तद्दर्शयति—**वरुणलोके इति** । वरुणलोकवासिनामयोनिजं शरीरं जलीयमित्यर्थः । ननु जलस्य द्रवत्वेन स्यन्दिततया घनीभूतकरचरणदन्तनखाद्यवयवारम्भकत्वासंभवात्कथं तत्तदवयवोपेतशरीरारम्भकत्वं कथं वानेवंविधस्यावयविनः रूपाद्युपभोगाभावाद्भोगायतनत्वमितिचेत्सत्यम् । तथापि तत्रावष्टम्भकपार्थिवभागादिसत्त्वान्नोक्तानुपपत्तिः । नच तत्र पार्थिवभागसत्त्वे तत्पार्थिवमेव स्यान्न जलीयमितिचेन्न । यत्र यद्भागस्याधिक्यं तस्य तदीयत्वेनैव व्यवहारात् । वरुणलोकस्थशरीरे च जलीयभागस्याधिक्याज्जलीयत्वम् । अतएवास्मदादिशरीरे जलभागस्य सत्त्वेऽपि पार्थिवभागस्याधिक्यात्पार्थिवत्वव्यवहारो न जलीयत्वव्यवहारः इति दिक् । जलीयमिन्द्रियं दर्शयति—**रसग्राहकमिति** । रसविषयकप्रत्यक्षजनकमित्यर्थः । जलीयत्वे सति रसविषयकग्रहजनकत्वं लक्षणम् । रूपरसस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहसंस्कारा एते चतुर्दश गुणा जले । रसनेन्द्रियस्य जलीयत्वेऽनुमानं प्रमाणं, तद्यथा—रसनेन्द्रियं जलीयं, द्रव्यत्वे सति रूपादिषु पञ्चसु मध्ये रसस्यैवाभिव्यञ्जकत्वात्, सक्तुरसाभिव्यञ्जकोदकवत् । जले मधुररसव्यञ्जकं हरीतक्यादिभक्षणम् । तस्य नामाह—**रसनमिति** । तदाश्रय-

---

१ धनवान्सुखीत्यादौ यथा धनाभिन्नसुखवान् इति बोधस्तथेत्यर्थः ।

माह—जिह्वाग्रेति । शेषं पूर्ववत् । विषय इति । आदिना करकादिपरिग्रहः ॥

उष्णस्पर्शवत्तेजः ।

तेजो निरूपयति—उष्णस्पर्शवदिति । उष्णस्पर्शवत्त्वं तेजसो लक्षणम् । अत्रापि जन्योष्णस्पर्शसमवायिकारणतावच्छेदकतया जन्यतेजस्त्वजातिसिद्धिः । तदवच्छिन्नजनकतावच्छेदकतया तेजस्त्वजातिसिद्धिरिति बोध्यम् । केचित्तु समवायेन विलक्षणनीलत्वावच्छिन्नं प्रति समवायेन तेजःसंयोगत्वेन हेतुत्वात्तेजस्त्वजातिसिद्धिरित्याहुः । ननूष्णं जलमिति प्रतीतेर्जलादावतिव्याप्तिरितिचेन्न । स्वसमवायिसंयुक्तत्वसंबन्धेन तेजोगतोष्णस्पर्शस्यैव जले प्रतीयमानत्वात् । ननु रत्नकिरणादावुष्णस्पर्शाभावादव्याप्तिरितिचेन्न । तत्राप्युष्णस्पर्शस्य सत्त्वात् । ननु यदि तत्रोष्णस्पर्शोऽस्ति कुतो नानुभूयत इतिचेन्न, तदुपष्टम्भकपार्थिवानुष्णाशीतस्पर्शेन तदभिभवात्[1] । ननु चक्षुरादौ प्रतिबन्धकशून्यत्वादुष्णत्वप्रतीतिः कथं न भवतीति वाच्यम्, तस्य अनुद्भूतत्वेन प्रत्यक्षाभावात् । एवं भास्वरशुक्लरूपवत्त्वमपि लक्षणं बोध्यम् । ननु वह्न्यादौ रक्तरूपस्य सुवर्णादौ च पीतरूपस्य दर्शनात् कथं तेजस्त्वव्यवहार इति चेन्न । तत्रोपष्टम्भकपार्थिवरूपाणामेव प्रतीयमानत्वात् । केचित्तु पृथिव्यवृत्तिनैमित्तिकद्रवत्ववद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं तेजसो लक्षणम् । तत्र क्षित्यादावतिव्याप्तिवारणाय पृथिव्यवृत्तीति, वाय्वादावतिव्याप्तिवारणाय नैमित्तिकद्रवत्ववद्वृत्तीति, पृथिव्यन्यत्वविशिष्टसत्तामादाय जलादावतिव्याप्तिवारणाय द्रव्यत्वव्याप्येति, वायुतेजोन्यतरत्वमादायातिव्याप्तिवारणाय जातीत्याहुः ॥

तच्च द्विविधम् । नित्यमनित्यं च । नित्यं परमाणुरू-

---

१ अभिभवो नाम बलवत्सजातीयग्रहणप्रयोज्यग्रहविषयत्वाभावः । प्रयोज्यत्वमावान्वयि ।

यम् । अनित्यं कार्यरूपम् । पुनस्त्रिविधं शरीरेन्द्रियवि-
षयभेदात् । शरीरमादित्यलोके प्रसिद्धम् । इन्द्रियं रूप-
ग्राहकं चक्षुः कृष्णताराग्रवर्ति । विषयश्चतुर्विधो भौमदि-
व्योदर्याकरजभेदात् । भौमं वह्न्यादिकम् । अबिन्धनं
दिव्यं विद्युदादि । भुक्तस्य परिणामहेतुरुदर्यम् । आक-
रजं सुवर्णादि ।

तेजो विभजते—तच्चेति । ननु चक्षुषः तैजसत्वे किं मानमि-
तिचेत् चक्षुस्तैजसं रूपादिषु पञ्चसु मध्ये रूपस्यैवाभिव्यञ्जकत्वात्
दीपप्रभावदित्यनुमानमेव । विषयस्य चातुर्विध्यमाह—विषय इति ।
भौमेति पार्थिवमात्रेन्धनमित्यर्थः । अबिन्धनमिति । आप एव
इन्धनं दीप्तिसाधनं यस्य तदित्यर्थः । भुक्तस्येति । भुक्तस्यान्नादेः
परिणामः परिपाकः तत्र हेतुरित्यर्थः । आकरेति । आकरः
खनिः तस्माज्जातमित्यर्थः । सुवर्णादीत्यादिपदेन रजतादिसंग्रहः ।
ननु सुवर्णं पार्थिवं पीतत्वात् हरिद्रादिवदितिचेन्न । असति प्रतिब-
न्धकेऽत्यन्तानलसंयोगेन पार्थिवद्रवत्वस्य नाश्यत्वात् सुवर्णे तु
तादृशानलसंयोगेऽपि द्रवत्वनाशादर्शनेन सुवर्णस्य तैजसत्वसिद्धिरिति
विभावनीयम् । तथाच सुवर्णमपार्थिवं प्रतिबन्धकाभावविशिष्टात्यन्ता-

१ दीप्तिसाधनत्वं च दहनावयवैर्मिहादहनोत्पादने सहकारित्वम् ।

२ लौकिकानां सुवर्णमितिव्यवहारगोचरे वस्तुनि पीतिमगुरुत्वादेः पार्थिव-
त्वव्यवस्थापकस्य, अनुच्छिद्यमानद्रवत्वस्य रूपापरावृत्तेश्च तद्बाधर्म्यव्यवस्थापकस्य
हेतोरुपलम्भात् किमिदं द्रव्यान्तरमाहोस्विदुक्तेष्वन्यतरदुत व्यामिश्रमिति भवति
संशयः । तत्र द्रव्यान्तरत्वस्वीकारे गौरवात्, उक्तेषु दर्शितधर्माणामेकत्रा-
समवायात्, व्यामिश्रमिदं द्रव्यद्वयमिति परीक्षकाः । तेषामयमाशयः—संदि-
ग्धसधर्मणोऽसंदिग्धाविपर्यस्तस्योपलम्भे तत्र दृष्टेन न्यायेन संदिग्धं निर्णेत-
व्यमिति । ननु कोऽयं संदिग्धसधर्मनिर्णीतदृष्टन्यायः । उच्यतेऽनुमानमेवेति ।
तथाहि—संदिग्धः पक्षः तेन समानो धर्मो हेतुरूपो यस्मिंस्तादृशो निर्णीतः
सपक्षः उदाहरणमितियावत् तत्र दृष्टो न्यायः व्याप्तिरूप इति । प्रकृते संदिग्धः
सुवर्णमितिव्यवहारगोचरः तेन समानो धर्मः पार्थिवत्वव्यवस्थापकहेतुसमाना-

ग्निसंयोगेऽप्यनुच्छिद्यमानद्रवत्वाधिकरणत्वात् यन्नैवं तन्नैवं यथा सर्पिरित्यनुमानं बोध्यम्। ननु तथापि सुवर्णादौ तेजसि उष्णत्वग्रहः कुतो न भवतीतिचेन्न। पार्थिवरूपस्पर्शाभ्यां भास्वररूपोष्णस्पर्शयोरभिभवादित्यलम्। रूपस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वद्रवत्वसंस्कारास्तेजस्येकादश गुणाः ॥

**रूपरहितः स्पर्शवान्वायुः । स द्विविधः । नित्योऽनित्यश्च । नित्यः परमाणुरूपः । अनित्यः कार्यरूपः । पुनस्त्रिविधः शरीरेन्द्रियविषयभेदात् । शरीरं वायुलोके । इन्द्रियं स्पर्शग्राहकं त्वक् सर्वशरीरवर्ति । विषयो वृक्षादिकम्पनहेतुः । शरीरान्तःसंचारी वायुः प्राणः । स चैकोऽप्युपाधिभेदात्प्राणापानादिसंज्ञां लभते ॥**

---

धिकरणमनुच्छिद्यमानद्रवत्वं तादृशैव रूपापरावृत्तिश्च तद्वान् जलमध्यस्थं घृतं तादृशः पीतपटश्च तत्र दृष्टो न्यायः द्रवत्वनाशं प्रति रूपपरावृत्तिं प्रति च प्रतिबन्धको यो द्रवद्रव्यसंयोगस्तस्य दर्शितधर्मनिष्ठा व्याप्तिः तेन निर्णेतव्य इत्यर्थः। अनुमानप्रयोगश्चेत्थम्—अत्यन्तानलसंयोगी पीतिमाश्रयः द्रवत्वनाशप्रतिबन्धकद्रवद्रव्यान्तरसंयुक्तः अत्यन्तानलसंयोगेऽप्यनुच्छिद्यमानद्रवत्वाधिकरणत्वे सति गुरुत्वात् जलमध्यस्थघृतादिवदिति । पीतिमगुरुत्वाश्रयः पीतरूपभिन्नरूपप्रतिबन्धकद्रवद्रव्यसंयुक्तः, अत्यन्तानलसंयोगेऽपि पीतरूपभिन्नरूपानाश्रयत्वात् अत्यन्तानलसंयोगिजलमध्यस्थपीतपटवदिति । अनेन न्यायद्वयेनापि द्रवद्रव्यसंयुक्तद्रव्यत्वं सुवर्णस्य सिद्धम् । इयांस्तु विशेषः यत्प्रथमे पीतिमाश्रयेऽपि नैमित्तिकद्रवत्वाङ्गीकार आवश्यकः, द्वितीये तु मषीक्षोदवदुपपत्तेर्न पीतिमाश्रये द्रवत्वाङ्गीकार इति। एवं प्रतिबन्धकतया सिद्धं द्रवद्रव्यं सुवर्णपदेन पक्षीकृत्य तस्मिंस्तैजसत्वं व्यवस्थाप्यते मूलस्थेनानुमानेन ननु पीतिमाश्रयम्। तच्च उक्तानुमानेन पार्थिवत्वस्य नैमित्तिकद्रवत्ववत्त्वाच्च जलीयत्वस्य निरासे, द्रवत्वस्य रूपवत्ताव्याप्यत्वेन वायवीयत्वादिनिरासे च परिशेषाद्बोध्यम्। 'अग्नेरपत्यं प्रथमं हिरण्यम्' इत्याद्यागमोऽप्यत्रानुसंधेय इति संक्षेपः ।

१ अभिभवोऽत्र बलवत्सजातीयसंबन्धः ननु बलवत्सजातीयग्रहणकृताग्रहणम्, अन्धकारे सुवर्णरूपग्रहापत्तेः ।

वायुं निरूपयति—**रूपरहित इति** । पृथिव्यादित्रयवारणाय रहितान्तं विशेषणम्, आकाशादिवारणाय विशेष्यदलम् । इन्द्रियं दर्शयति—**स्पर्शेति** । स्पर्शग्राहकमित्युपलक्षणं महत्त्वोद्भूतरूपस्पर्शवद्द्रव्यतद्वृत्तिकर्मसामान्यसमवायसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वद्रवत्वस्नेहानामपि ग्राहकम् । त्वगिन्द्रियस्य वायवीयत्वे त्वगिन्द्रियं वायवीयं रूपादिषु पञ्चसु स्पर्शस्यैव ग्राहकत्वादित्यनुमानमेव प्रमाणं बोध्यम् । ननु प्राणस्य क्तप्तेष्वन्तर्भावाभावेऽतिरिक्तत्वापत्तिरित्याशङ्क्याह—**शरीरान्तःसंचारीति** । तथाच तस्य वायवीयविषयेऽन्तर्भावान्न दोष इति भावः । नन्वेवमपानादिव्यवहारस्य निर्विषयत्वापत्तिरितिचेत्तत्राह—**उपाधिभेदादिति** । स्थानभेदात्क्रियाभेदाच्चेत्यर्थः । तथाहि—हृदि स्थितत्वान्मुखनासिकाभ्यां निर्गमनप्रवेशनाच्च प्राण. । गुदे स्थितत्वान्मलादेरधोनयनाच्चापानः । नाभौ स्थितत्वात् भुक्तपरिपाकाय जाठरानलस्य समं नयनाच्च समानः । कण्ठे स्थितत्वादन्नादेरूर्द्ध्वनयनाच्चोदानः । सर्वशरीरे स्थितत्वान्नाडीमुखेषु वितननाच्च व्यानः इति । नागकूर्मादयोऽपि प्राणादीनामेव भेदाः ॥

अथ सृष्टिसंहारप्रक्रिया—परमेश्वरस्य सर्जनेच्छावशात् परमाणुषु कर्मोत्पत्तिः, ततः परमाण्वन्तरेण संयोगः, ततः परमाणुसमवायिकारणकः परमाणुद्वयसंयोगासमवायिकारणकः अदृष्टादिनिमित्तकारणको द्व्यणुक उत्पद्यते । ततः पूर्वोक्तयुक्त्या त्रिभिर्द्व्यणुकैस्त्र्यणुकः । एवं चतुर्भिर्द्व्यणुकैश्चतुरणुक इत्यादिक्रमेण महती पृथिवी महज्जलं महत्तेजो महान्वायुरुत्पद्यते इति निमित्तकारणत्वमीश्वरस्य[1] सिध्यति । 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यं प्रयन्त्यभिसंविशन्ति' इति श्रुतेरप्यत्रैव तात्पर्यम् । एवं संहरणविषयकतदिच्छावशात्परमाणुषु कर्मोत्पत्तिः ततो विभागस्ततः परमाणुद्वयसंयोग-

---

१ ईश्वरस्य निमित्तकारणत्वे एव ।

नाशस्ततो व्यणुकनाशस्ततस्त्र्यणुकनाश इत्यादिरीत्या महापृथिव्यादीनां नाशः । अत्र प्रमाणं 'धाता यथापूर्वमकल्पयत्' इतिश्रुतिरेव । प्राञ्चस्तु केचित्समवायिकारणनाशात् केचिदसमवायिकारणनाशात् कार्यनाश इति प्रोचुः । सर्वत्रासमवायिकारणनाशात् कार्यद्रव्यनाश इति नव्या इत्यलं विस्तरेण ॥

**शब्दगुणकमाकाशम् । तच्चैकं विभु नित्यं च ॥**

आकाशं निरूपयति—शब्देति । अत्र आकाशत्वं न जातिः एकव्यक्तिवृत्तित्वात् । तथा चोक्तं—

> व्यक्तेरभेदस्तुल्यत्वं संकरोऽथानवस्थितिः ।
> रूपहानिरसंबन्धो जातिबाधकसंग्रहः ॥ इति

अत्र यद्यपि शब्दवत्त्वमाकाशस्य लक्षणं संभवति तथापि शब्दे विशेषगुणत्वद्योतनाय गुण इति । रूपरसगन्धस्पर्शसांसिद्धिकद्रवत्वस्नेहशब्दबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाख्यसंस्कारा एते विशेषगुणाः । अन्ये संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वनैमित्तिकद्रवत्ववेगाः सामान्यगुणाः । तत्र संख्यापरिमाणपृथक्त्वसंयोगविभागशब्दा आकाशे ज्ञेयाः । ननु पृथिव्यादिवदस्यापि नित्यत्वानित्यत्वादिना विभागः स्यादित्याशङ्कां परिजिहीर्षुराह—तच्चैकमिति । तथाचाकाशस्यैकत्वाद्विभागो नास्तीति भावः ।

---

१ सृष्टिप्रलयसद्भावे ।

२ त्र्यणुकादौ ।

३ द्व्यणुके ।

४ व्यक्तेरभेदः स्वाश्रयव्यक्तेरैक्यमाकाशत्वादेर्जातित्वे बाधकम् । व्यक्तेस्तुल्यत्वं च अन्यूनानतिरिक्तव्यक्तिकत्वं घटत्वकलशत्वयोर्जातित्वे बाधकम् । संकरः परस्परात्यन्ताभावसमानाधिकरणयोर्धर्मयोरेकत्र समावेशः भूतत्वमूर्तत्वयोर्जातित्वे बाधकः । अनवस्था जातित्वादेर्जातित्वे बाधिका । रूपहानिः स्वतोव्यावर्तकत्वात्मकस्य रूपस्य हानिः विशेषत्वस्य जातित्वे बाधिका । असंबन्धः असमवेतत्वमभावत्वादेर्जातित्वे बाधकः ।

चिभ्विति। विभुत्वं सर्वमूर्तद्रव्यसंयोगित्वम्। मूर्तत्वं परिच्छिन्नपरिमाणवत्त्वं, तच्च पृथिव्यप्तेजोवायुमनोवृत्ति। ननु शब्दस्याकाशवृत्तित्वे किं मानमितिचेत्, शब्दः अष्टद्रव्यातिरिक्तद्रव्याश्रितः, अष्टद्रव्यानाश्रितत्वे सति समवेतकार्यत्वात् यन्नैवं तन्नैवं यथा रूपमिति परिशेषानुमानमेव प्रमाणमवेहि। नच शब्दे हेतुघटकाष्टद्रव्यानाश्रितत्वमेवासिद्धमिति साध्यसमो हेतुरिति वाच्यम्, शब्दः अष्टद्रव्यानाश्रितः बहिरिन्द्रिययोग्यविशेषगुणत्वे सति अग्निसंयोगासमवायिकारणकत्वाभावे च सति अकारणगुणपूर्वकप्रत्यक्षत्वात् यन्नैवं तन्नैवं यथा रूपमिति व्यतिरेक्यनुमानेन तत्साधनात्। तत्र सुखादौ व्यभिचारवारणाय बहिरिन्द्रिययोग्येति, संख्यादावतिव्याप्तिव्यारणाय विशेषगुणेति, पाकजरूपादौ व्यभिचारवारणाय द्वितीयसत्यन्तम्, पटरूपादौ व्यभिचारवारणायाकारणगुणपूर्वकेति, अलपरमाणुरूपादौ व्यभिचारवारणाय प्रत्यक्षेति। यदि च योग्यत्वं प्रत्यक्षत्वं तदा प्रत्यक्षत्वेत्यनुपादेयमेव। नव्यास्तु शब्दनिमित्तकारणत्वेन कॢप्तस्येश्वरस्यैव शब्दसमवायिकारणत्वमित्याहुः। वाचाटास्तु मृदङ्गादीनामेव गुणः शब्दः शब्दं प्रति मृदङ्गत्वादिना समवायिकारणतायाः स्वीकारात् मृदङ्गे शब्द इत्यादिप्रतीतेरिति वदन्ति।

**अतीतादिव्यवहारहेतुः कालः। स चैको विभुर्नित्यश्च॥**

कालं लक्षयति—**अतीतादीति**। अतीतत्वं वर्तमानकालवृत्तिध्वंसप्रतियोगित्वम्। अनागतत्वं वर्तमानकालवृत्तिप्रागभावप्रतियोगित्वम्। वर्तमानत्वं प्रयोगाधिकरणकालत्वमिति। क्षणदिनमासर्संवत्सरादिव्यवहाराणामौपाधिकत्वादाह—**सचेति**। विभुत्वं चात्र सकलकार्याधारत्वं सकलकार्यनिमित्तकारणत्वं वा। ननु कार्यमात्रं प्रति तस्य निमित्तकारणत्वे किं मानमितिचेन्न। अद्य घटो भविष्यति श्वः पटो भवितेत्यादिप्रत्ययेन तत्तत्कालस्योपादानात्। नच तत्तत्कालस्यास्तु निमित्तकारणत्वं नैता-

वता महाकाले निमित्तकारणत्वं सिद्धमिति वाच्यम् । यद्विशेषयोः कार्यकारणभावस्तत्सामान्ययोरपि तथेति नियमेन कालसामान्ये निमित्तकारणत्वस्वीकारादिति । ननु 'अद्य घटो भविष्यति' इत्यादिप्रतीतेः सूर्यपरिस्पन्दालम्बनत्वेनैवोपपत्त्यावतिरिक्तकालस्वीकारे मानाभाव इतिचेन्न । इदानीमेतद्देशे सूर्यपरिस्पन्दः इति प्रतीत्या घटादेरिव सूर्यपरिस्पन्दस्यापि विलक्षणाधिकरणावगाहनात्तत्र च सूर्यपरिस्पन्दस्याधिकरणत्वासंभवादतिरिक्तकालानङ्गीकारे तादृशप्रतीत्यनुपपत्तेरिति दिक् । क्षणादिव्यवहारप्रयोजकोपाधयस्तु स्वजन्यविभागप्रागभावावच्छिन्नं कर्म, पूर्वसंयोगावच्छिन्नविभागो वा, पूर्वसंयोगनाशावच्छिन्नोत्तरसंयोगप्रागभावः, उत्तरसंयोगावच्छिन्नं कर्म, एतद्विशिष्टः कालः क्षण इत्युच्यते, क्रिया क्रियातो विभागः ततः पूर्वसंयोगनाशः तत उत्तरसंयोगोत्पत्तिः ततः क्रियानाश इति क्रमानुसारादिति । संख्यादयः पञ्च गुणाः काले ॥

**प्राच्यादिव्यवहारहेतुर्दिक् । सा चैका नित्या विभ्वी च ॥**

दिशं निरूपयति—प्राच्यादीति । आदिना प्रतीच्यादीनां संग्रहः । तद्व्यवहारकारणत्वं तल्लक्षणम् । उदयाचलसन्निहितदेशावच्छिन्ना दिक् प्राची । तद्वत्वं प्राच्यत्वम् । अस्ताचलसन्निहितदेशावच्छिन्ना प्रतीची, मेरुसन्निहितदेशावच्छिन्ना उदीची, मेरुव्यवहितदेशावच्छिन्ना अवाची । एवमन्या दिशो बोध्या[१] । घटादुद्ध्वनापेक्षया शरावो दूर इत्यादिव्यवहारहेतुपरत्वादिजनक—बहुतरसंयोगविशिष्टशरावज्ञाने संसर्गतया विषयीभूतवैशिष्ट्यघटकतया दिशः सिद्धिर्बोध्या । अत्रापि हेतावसाधारणत्वं विशेषणं देयमन्यथा कालादावतिव्याप्तिः । अत्रापि प्राच्यादिव्यवहार औपाधिको बोध्यः, उपाधयस्त्वधस्तादर्शिताः । दीधितिकारादयस्तु दिक्कालावतिरिक्तौ न मन्यन्ते, तयोरपीश्वरेऽन्तर्भावसंभवादिति दिक् ॥

---

१ स्वसमवायिसंयुक्तसंयोगह्रपपरंपरारूपम् ।

**ज्ञानाधिकरणमात्मा। स द्विविधः। जीवात्मा परमात्मा चेति। तत्रेश्वरः सर्वज्ञः परमात्मा एक एव। जीवस्तु प्रतिशरीरं भिन्नो विभुर्नित्यश्च॥**

अष्टमं द्रव्यं निरूपयति—ज्ञानाधिकरणमिति। ज्ञानवत्त्वमात्मनो लक्षणम्। अधिकरणपदं तु समवायेनाश्रयतालाभाय। आत्मत्वं जातिः सा चेश्वरेऽप्यस्ति। ननु कथमात्मत्वजातिसिद्धिरिति चेत्, सुखदुःखादिसमवायिकारणतावच्छेदकतयेति गृहाण। भावकार्यस्य समवायिकारणजन्यत्वात्। नित्यस्य सरूपयोग्यस्य फलावश्यंभावनियम इत्यस्याप्रयोजकत्वात्। तथाच सुखसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वं, सुखसमानाधिकरणद्रव्यविभाजकोपाधिमत्त्वं वाऽपि तल्लक्षणमिति फलितोऽर्थः। आत्मानं विभजते—स द्विविध इति। स पूर्वोक्तलक्षणलक्षित इत्यर्थः। परमात्मेति। नित्यज्ञानादिमत्त्वं परमात्मनो लक्षणम्। आत्मनि परमत्वं सृष्टिस्थितिलयकर्तृत्वं, तदेव जीवेश्वरयोर्भेदसाधकम्। तत्र परमात्मा ईश्वरः नित्यज्ञानेच्छाकृतिमान् स्वतन्त्रः जगदुत्पत्तिस्थितिसंहारकारकः, सर्वज्ञः सर्वविषयकज्ञानवान् 'यः सर्वज्ञः सर्ववित्' इतिश्रुतेः, एकः स्वसमानधर्मकद्वितीयभेदाभाववान्, तेन जीवस्य ईश्वरेण सह भेदे विवक्षितेऽपि न क्षतिः। क्षित्यङ्कुरादिकं कर्तृजन्यं कार्यत्वात्, घटवदित्यनुमानेन जगत्कर्तृतयेश्वरसिद्धिर्बोध्या। जीवस्त्विति। तत्तन्मनोविशिष्टशरीरावच्छिन्नभोगवत्त्वे सति तादृशभोगवद्भिन्न इत्यर्थः। दुःखसमानाधिकरणनित्यज्ञानासमानाधिकरणजातिमत्त्वं जीवलक्षणं पर्यवसितम्। संख्यादयः पञ्च बुद्ध्यादयोऽष्टौ संस्कारश्चैते चतुर्दश गुणा जीवे। संख्यादिपञ्चकं ज्ञानेच्छाकृतय एतेष्ट ईश्वरे इति बोध्यम्॥

**सुखाद्युपलब्धिसाधनमिन्द्रियं मनः। तच्च प्रत्यात्मनियतत्वादनन्तं परमाणुरूपं नित्यं च॥**

मनो निरूपयति—सुखाद्युपलब्धीति। सुखादीनामुपलब्धिर्ज्ञानं तत्साधनत्वे सतीन्द्रियत्वं मनसो लक्षणम्। **परमाणुरूपमिति**। ननु मनसो विभुत्वमेवास्तु नच कपोलकल्पितपक्षमात्रेण नार्थसिद्धिरिति वाच्यम्। मनो विभु स्पर्शरहितद्रव्यत्वादात्मवदित्यनुमानस्य प्रमाणत्वात्। नच ज्ञानानुपपत्तिः विभुद्वयसंयोगस्याप्यङ्गीकारादितिचेन्न। ज्ञानत्वावच्छिन्नं प्रति पुरीतदन्तर्देशातिरिक्तदेशावच्छेदेन आत्ममनःसंयोगस्य कारणतायाः क्लृप्तत्वेन मनसोऽणुत्वाङ्गीकारे सुषुप्तिकाले तस्य पुरीतति प्रवेशाङ्गीकाराद्बहिर्देशावच्छेदेनात्ममनःसंयोगस्यासत्त्वेन ज्ञानाभावोपपत्तावपि तस्य विभुत्वाङ्गीकारे पुरीतद्बहिर्देशावच्छेदेनात्ममनःसंयोगाभावस्य वक्तुमशक्यत्वेन सुषुप्तिकालेऽपि ज्ञानोत्पत्तिप्रसङ्गात्। तच्चेति। प्रत्यात्मेति। आत्मनामानन्त्येन मनसोप्यानन्त्यमित्यर्थः। संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वसंस्कारा एतेऽष्टौ गुणा मनसि।

**चक्षुर्मात्रग्राह्यो गुणो रूपम्।**

द्रव्यनिरूपणानन्तरं क्रमप्राप्तान् गुणान्निरूपयति—तत्राप्युद्देशक्रमेण प्रथमं रूपं लक्षयति—चक्षुर्मात्रग्राह्य इति। इतरेन्द्रियाग्राह्यत्वं मात्रशब्दार्थः। चक्षुपश्चेतरत्वे ग्रहे चान्वयः। अथवा ग्राह्यपदस्यैव चक्षुरितरेन्द्रियाग्राह्यत्वविशिष्टचक्षुर्ग्राह्यत्वविशिष्टे लक्षणा मात्रान्तं तु तात्पर्यग्राहकं, ग्राह्यत्वं च लौकिकग्रहविषयताश्रयत्वं तेन गुरुत्वादीनामलौकिकग्रहेऽपि नातिव्याप्तिः। न वान्येन्द्रियजन्यालौकिकग्रहविषयत्वेऽपि रूपादीनामसंभवः। तथाच चक्षुरितरेन्द्रियजन्यलौकिकग्रहविषयताशून्यत्वे सति चक्षुरिन्द्रियजन्यलौकिकग्रहविषयता-

---

१ आत्मना सयोगासंभवात् संयोगस्याप्राप्तिपूर्वकप्राप्तित्वात् विभुनोस्तु नित्यसर्वगतत्वेन क्रियाशून्यत्वेन च तदसंभवादिति भावः।

२ अनित्यसंयोगस्यैव तथात्वात्। द्रव्यद्वयं युगपत्समानदेशमसंबद्धं चेत्यस्य युक्तिविरुद्धत्वात् अन्यथा विभुमूर्तसंयोगस्याप्यनङ्गीकारप्रसङ्गादित्यभिप्रायः।

३ लाघवात्त्वगिन्द्रियाग्राह्यत्वे सतीत्येव वक्तव्यम्।

शालित्वे सति गुणत्वं समुदितलक्षणार्थः। संयोगादिवारणाय प्रथमसत्यन्तं, गुरुत्वादिवारणाय द्वितीयसत्यन्तं, रूपत्वादिवारणाय गुणपदम्। ननु तथापि प्रभाभित्तिसंयोगेऽतिव्याप्तिरिति चेन्न। गुणपदेन विशेषगुणस्य विवक्षणीयत्वात्। यदि च परमाणुरूपेऽव्याप्तिवारणाय जातिघटितलक्षणं विवक्षितं स्यात्तदा विशेषपदं न देयम्। तथाच चक्षुर्मात्रग्राह्यजातिमत्त्वे सति गुणत्वं पर्यवसितोऽर्थः। जातौ तद्ग्राह्यत्वं येनेन्द्रियेण यत्प्रत्यक्षं तन्निष्ठजातेः तदभावस्य च प्रत्यक्षं तेनेन्द्रियेणैवेति नियमात्। रूपत्वादीनि सर्वाण्येव जातयः प्रत्यक्षादिप्रमाणसिद्धा इति सुधीभिर्विभावनीयम्।

**तच्च शुक्लनीलपीतरक्तहरितकपिशचित्रभेदात्सप्तविधम्। पृथिवीजलतेजोवृत्ति। तत्र पृथिव्यां सप्तविधम्। अभास्वरशुक्लं जले। भास्वरशुक्लं तेजसि॥**

रूपं विभजते—**तच्चेति**। चित्ररूपे प्रमाणं तु चित्रः पटः इति प्रतीतिरेव। ननु चित्रः पटः इति प्रतीतिस्तन्तुगतनीलपीतादिकमेवावगाहत इति चेन्न। तथासति पटे रूपाभावात्तत्प्रत्यक्षानुपपत्तिः। विषयतासंबन्धेन द्रव्यचाक्षुषं प्रति समवायेनोद्भूतरूपस्य तन्त्रत्वात्। तदाश्रयमाह—**पृथिवीति**। शुक्लत्वादयोऽपि जातयः। नच शुक्लादीनामेकत्वात् कथं शुक्लत्वादयो जातयः इति चेन्न। शुक्लो नष्टः, शुक्ल उत्पन्नः इत्यादिप्रतीतेः शुक्लादीनामुत्पादविनाशशालित्वेन नानात्वात् अन्यथैकत्र शुक्लस्य नाशेन सर्वत्र तदभावप्रसङ्गात्। नच तादृशप्रत्ययः शुक्लादिप्रतियोगिकसमवायस्यैव जन्मविनाशाववगाहत इति वाच्यम्। तादृशप्रतीत्यभिलापकेन समवायस्यानुल्लेखनात्, शुक्लादीनामेव चोल्लेखात्, समवायस्य नित्यत्वेन तत्रोत्पादविनाशयोरसंभवाच्च। **अभास्वरशुक्लमिति**। नच कालिन्दीजलादौ नीलिमो-

१ शुक्लस्यातीन्द्रियत्वेन चक्षुरितरेन्द्रियाग्राह्यत्वस्य गुणत्वस्य च सत्त्वादिति भावः।

पलब्धेर्व्यभिचार इति वाच्यम् । आश्रयीभूतपृथिव्या एव तत्रोपाधित्वात् । अन्यथा हस्तादौ धृते तसिन्धवलिमोपलब्धिर्न स्यादिति ।

**रसनग्राह्यो गुणो रसः ।**

रसं निरूपयति—रसनग्राह्य इति । रसनेन्द्रियजन्यज्ञानविषयत्वे सति गुणत्वं रसस्य लक्षणम् । अत्रापि पूर्ववत्सर्वमूह्यम् ।

**स च मधुराम्ललवणकटुकषायतिक्तभेदात् षड्विधः । पृथिवीजलवृत्तिः । पृथिव्यां षड्विधः । जले मधुर एव ॥**

रसं विभजते—स चेति । षड्विध इति । रूपस्येव रसस्य द्रव्यप्रत्यक्षं प्रत्यहेतुत्वाच्चित्ररसानङ्गीकारेऽपि क्षितिविरहेण पानकादौ रसप्रतीतेस्त्ववयवगतरससमुदायविषयकत्वेनाप्युपपत्तौ चित्ररसो नाङ्गीकर्तव्य इति भावः । जले मधुर एवेति । जम्बीरकरवीररसादावन्यरसोपलब्धिस्त्वौपाधिकीति भावः ।

**घ्राणग्राह्यो गुणो गन्धः । स द्विविधः । सुरभिरसुरभिश्च । पृथिवीमात्रवृत्तिः ॥**

गन्धं निरूपयति—घ्राणग्राह्य इति । चित्रगन्धस्तु नाङ्गीक्रियते अवयवगन्धेनैवोपपत्तेरिति भावः । जलादौ गन्धप्रतीतिस्त्वौपाधिक्येव पृथिवीसंयोगसत्त्वे गन्धसत्त्वं पृथिवीसंयोगाभावे गन्धाभाव इत्यन्वयव्यतिरेकयोः सत्त्वात् ।

**त्वगिन्द्रियमात्रग्राह्यो गुणः स्पर्शः । स च त्रिविधः । शीतोष्णानुष्णाशीतभेदात् । पृथिव्यप्तेजोवायुवृत्तिः । तत्र शीतो जले । उष्णस्तेजसि । अनुष्णाशीतः पृथिवीवाय्वोः । रूपादिचतुष्टयं पृथिव्यां पाकजमनित्यं च । अन्यत्रापाकजं नित्यमनित्यं च । नित्यगतं नित्यम् । अनित्यगतमनित्यम् ॥**

स्पर्शं निरूपयति—त्वगिन्द्रियमात्रग्राह्य इति । मात्रपदं

संख्यादिवारणाय । अत्रापि लक्षणघटकपदप्रयोजनं रूपवद्बोध्यम् । तं विभज्य दर्शयति—शीतोष्णेत्यादिना । तत्रेति पृथिव्यादिचतुष्टयमध्ये इत्यर्थः । **शीतो जल इति** । उष्णादिप्रतीतिस्त्वौपाधिकयेवेति भावः । पृथिव्यादिचतुष्टये रूपादीनां नित्यत्वानित्यत्वे दर्शयति—**रूपादिचतुष्टयमिति** । **अपाकजमिति** । पाकस्तेजःसंयोगस्तस्माज्जातं पाकजं तद्भिन्नमपाकजम् । तथाच पृथिव्यामग्निसंयोगाद्विजातीयरूपाद्युत्पादो दृश्यते । जलादौ शतशः क्रियमाणेपि तेजःसंयोगे रूपान्तरोत्पत्तिः क्वापि न भवतीति भावः । अत्र पीलुपाकवादिनो वैशेषिकाः, तेषामयमाशयः—आपाकनिक्षिप्ते घटे अत्यन्तानलसंयोगे परमाणुषु क्रिया, ततो विभागादिक्रमेण द्व्यणुकादिमहाऽवयविपर्यन्तस्य नाशः, ततः परमाणुष्वेव पाकेन रूपान्तरोत्पत्तिर्भवति पुनश्चेश्वरेच्छावशतः परमाणुषु क्रिया ततस्तयोः संयोगस्ततो द्व्यणुकोत्पत्तिः । एवं क्रमेण महावयवी घट उत्पद्यते । तथाचावयवगतरूपादिनैव कारणगुणपूर्विकावयविनि रूपाद्युत्पत्तिरिति वदन्ति । पिठरपाकवादिनो नैयायिकास्तु आपाकनिक्षिप्ते घटे तदवयवेषु परमाणुपर्यन्तेषु चैकदैवात्यन्तानलसंयोगेनावयविविनाशमन्तरेणैव रूपान्तरमुत्पद्यते । नच द्व्यणुकाद्यवयविनि कथं पाकः, अवयवेषु यदवच्छेदेनावयव्यारम्भकसंयोगस्तदवच्छेदेन तत्प्रतिद्वन्द्विविभागमन्तरेण तेजःसंयोगरूपपाकासंभवान्मूर्तयोः समानदेशताविरोधादिति वाच्यम् । अवयविनां सच्छिद्रत्वेन वह्नेः सूक्ष्मावयवैरन्तः प्रविष्टैरवयवेष्ववयविनावष्टब्धेष्वपि पाकस्याविरोधादवयविन्यपि पाको न विरोधावह इत्याहुः । स्पर्शे पाकजत्वं तु प्रत्यक्षसिद्धमेवेति दिक् ।

---

१ परमाणुरूपेऽव्याप्तिवारणायेत्यत्र परमाणुस्पर्शे इति विशेषः ।

२ पीलुः परमाणुस्तस्मिन्नेव पाको भवतीति वादिनः ।

३ भर्जनार्थं घटादयो यस्मिन्निक्षिप्यन्ते कुलालेन स आपाकः । आमपाकेति पाठस्तु आपाकशब्दमश्रुतवता केनचित्पण्डितंमन्येन कल्पित इति नादर्तव्यः ।

४ अवयवावयविसमुदायः पिठरः तस्मिन्नेव पाको न परमाणुष्वेवेति वादिनः ।

**एकत्वादिव्यवहारहेतुः संख्या। सा नवद्रव्यवृत्तिः। एकत्वादिपरार्धपर्यन्ता। एकत्वं नित्यमनित्यं च। नित्यगतं नित्यम्। अनित्यगतमनित्यम्। द्वित्वादिकं तु सर्वत्रानित्यमेव॥**

संख्यां निरूपयति—एकत्वादीति। एकत्वादीनां यो व्यवहारः अयमेक अयमेक इमौ द्वावित्याकारकस्तदसाधारणहेतुत्वं संख्यालक्षणम्। संख्यायाः सावधित्वं निरूपयन्नाह—एकत्वादिपरार्धपर्यन्तेति। तथाच—

एकं दश शतं चैव सहस्रमयुतं तथा।
लक्षं च नियुतं चैव कोटिरर्बुदमेव च॥
वृन्दं खर्वो निखर्वश्च शङ्ख पद्मश्च सागरः।
अन्त्यं मध्यं परार्द्धं च दशवृद्ध्या यथाक्रमम्॥

इत्यभियुक्तोक्तेः परार्द्धपर्यन्तैव संख्येति भाव। नित्येषु परमाण्वादिषु गतं वर्तमानमेकत्वं नित्यं ध्वंसाप्रतियोगि। अनित्येति। अनित्ये चानित्यं ध्वंसप्रतियोगि। आश्रयनाशेन नाशादिति भावः। द्वित्वादिकं तु सर्वत्र नित्येऽनित्ये चेत्यर्थः। अनित्यमिति। द्वित्वादीनां स्वजनकापेक्षाबुद्धिनाशनाश्यत्वात्। तथाच अपेक्षाबुद्धिनाशाचेषां नाश इति भावः। अपेक्षाबुद्धिश्च अयमेक अयमेक इमौ द्वौ इत्याकारिका। तन्नाशक्रमश्चैवं—प्रथममपेक्षाबुद्धिस्ततो द्वित्वोत्पत्तिः ततो विशेषणज्ञानं द्वित्वत्वनिर्विकल्पात्मकं ततो द्वित्वत्वविशिष्टप्रत्यक्षमपेक्षाबुद्धिनाशश्च ततो द्वित्वनाश इति। अपेक्षाबुद्धिः क्षणत्रयं तिष्ठतीति कल्पनीयम्। अन्यथा निर्विकल्पककालेऽपेक्षाबुद्धिनाशात्तदनन्तरं द्वित्वप्रत्यक्षात्प्रागेव द्वित्वस्यैव नाशः स्यादिति दिक्।

**मानव्यवहारासाधारणं कारणं परिमाणम्। नवद्रव्यवृत्ति। तच्चतुर्विधम्। अणु महद्दीर्घं ह्रस्वं चेति॥**

परिमाणं निरूपयति—मानव्यवहारेति। परिमाणादीनां नि-

स्त्वादिकं संख्यावत्स्वयमूह्यम् । आश्रयं दर्शयति—नवद्रव्यवृत्तीति । अणु महद्दीर्घं ह्रस्वं चेति भावप्रधाननिर्देशाऽत्र विरोध इति भावः ।

**पृथग्व्यवहारासाधारणकारणं पृथक्त्वम् । सर्वद्रव्यवृत्ति ॥**

पृथक्त्वं निरूपयति—पृथग्व्यवहारेति । अयमस्मात्पृथगिति यो व्यवहारस्तस्य कारणं पृथक्त्वमित्यर्थः । तच्चानेकविधमेकपृथक्त्व-द्विपृथक्त्वादिभेदात् । तत्रैकपृथक्त्वं नित्यगतं नित्यमनित्यगतमनित्यम् । द्विपृथक्त्वादिकं तु सर्वत्रानित्यमेव । ननु भेदातिरिक्तस्य पृथक्त्वस्य सत्त्वे किं मानमिति चेन्न । घटः पटो न, घटः पटात्पृथगिति प्रतीत्योर्वैलक्षण्यप्रतीतेरेव प्रमाणत्वात् ॥

**संयुक्तव्यवहारहेतुः संयोगः । सर्वद्रव्यवृत्तिः ॥**

संयोगं निरूपयति—संयुक्तव्यवहारेति । इमौ संयुक्ताविति यो व्यवहारस्तस्यासाधारणकारणत्वं संयोगस्य लक्षणमित्यर्थः । असाधारणत्वं च तादृशव्यवहारजनकतावच्छेदकमुख्यप्रकारतावत्त्वं[1] बोध्यम् । एवमग्रेपि । संयोगोऽव्याप्यवृत्तिरनित्यश्च । अव्याप्यवृत्तित्वं स्वात्यन्ताभाववद्वृत्तित्वं यथा वृक्षे मूलावच्छेदेन संयोगात्यन्ताभावः, संयोगश्च शाखावच्छेदेन । तथाच द्वयोरेकाधिकरणवृत्तित्वात् तस्याव्याप्यवृत्तित्वम् ।

**संयोगनाशको गुणो विभागः । सर्वद्रव्यवृत्तिः ॥**

विभागं निरूपयति—संयोगनाशक इति । विभागोऽप्यनित्योऽव्याप्यवृत्तिश्च । संयोगनाशकत्वं च विभागे प्रथमं हस्तादौ क्रिया ततः हस्ताकाशविभागस्ततः पूर्वसंयोगनाशस्तत उत्तरदेशसंयोगोत्पत्तिः ततः हस्तक्रियानाश इति नियतक्रमाश्रयणात् ।

**परापरव्यवहारासाधारणकारणे परत्वापरत्वे । पृथिव्यादिचतुष्टयमनोवृत्तिनी । ते च द्विविधे । दिक्कृते का-**

---

[1] प्रकारतायां मुख्यत्वं च प्रकारत्वासमानाधिकरणविशेष्यतानिरूपितत्वम् ।

लकृते चेति । दूरस्थे दिक्कृतं परत्वम् । समीपस्थे दिक्कृतमपरत्वम् । ज्येष्ठे कालकृतं परत्वं । कनिष्ठे कालकृतमपरत्वम् ॥

परत्वापरत्वे युगपन्निरूपयति—परापरव्यवहारेति । परव्यवहारजनकतावच्छेदकमुख्यप्रकारतावत्त्वं परत्वम् । अपरव्यवहारजनकतावच्छेदकतादृशप्रकारतावत्त्वमपरत्वम् । तयोर्द्वैविध्यं कथयन्नाह—ते द्विविधे इति ।

आद्यपतनासमवायिकारणं गुरुत्वम् । पृथिवीजलवृत्ति ॥

गुरुत्वं निरूपयति—आद्यपतनेत्यादि । आद्यत्वं स्वसमानाधिकरणपतनप्रतियोगिकध्वंसासमानकालीनत्वम् । वृन्ताद्विश्लिष्टस्य फलस्य भूमिसंयोगपर्यन्तमनेकाः क्रिया भवन्ति तत्र प्राथमिका क्रिया गुरुत्वजन्या द्वितीयादयस्तु वेगजन्या इति वेगवारणायाद्येति ।

स्यन्दनासमवायिकारणं द्रवत्वम् । पृथिव्यप्तेजोवृत्ति । तद्द्विविधम् । सांसिद्धिकं नैमित्तिकं च । सांसिद्धिकं जले । नैमित्तिकं पृथिवीतेजसोः । पृथिव्यां घृतादावग्निसंयोगजं द्रवत्वम् । तेजसि सुवर्णादौ ॥

द्रवत्वं निरूपयति—स्यन्दनेति । स्यन्दनं स्रवणं तच्च संनिकृष्टदेशे द्रवद्रव्यसंयोगानुकूलो व्यापारः । अत्रापि द्वितीयादिव्यापारजनकवेगवारणाय आद्यपदं देयम् । क्वचित्तथैव पाठः । सांसिद्धिकमिति । अग्न्यादिसंयोगाजन्यमित्यर्थः । नैमित्तिकमिति । अग्न्यादिसंयोगजन्यमित्यर्थः । पृथिवीति । ननु नैमित्तिकद्रवत्वस्य पृथिव्यां घटादौ तेजसि वह्न्यादौ चाभावात् पृथिवीतेजसो-

१ अत्र स्वत्वस्य प्रतियोगिन्यन्तर्भावात् स्वपदेन लक्ष्यभिन्नस्य ग्रहणम् । तथाच स्वसमानाधिकरणपतनप्रतियोगिकध्वंससमानकालीनं यद्यत्तद्भिन्नत्वमर्थः स्वं द्वितीयादिपतनं तत्समानाधिकरणं पतनं प्रथमपतनं तत्प्रतियोगिकध्वंससमानकालीनत्वमेव द्वितीयादिपतनानां तद्भिन्नत्वं प्रथमे इति लक्षणसमन्वयः ।

रिति ग्रन्थासंगतिरित्यत आह—पृथिव्यामिति । करकादौ तथोपलब्धिस्तु भ्रान्तिरेवेति भावः ।

**चूर्णादिपिण्डीभावहेतुर्गुणः स्नेहः । जलमात्रवृत्तिः ॥**

स्नेहं निरूपयति—चूर्णादीति । चूर्णं पिष्टं तदेव आदिर्यस्य गोधूमादेः स चूर्णादिस्तस्य पिण्डीभावः अवयवानां दृढसंयोगविशेषस्तस्य हेतुर्निमित्तकारणं स्नेह एवेत्यर्थः । चूर्णादावतिव्याप्तिवारणाय गुणेति । तैलादौ च तदन्तर्गतजलभागस्यैव स्नेह इति न विरोधः । सोऽपि पूर्ववद्विविधः ।

**श्रोत्रग्राह्यो गुणः शब्दः । आकाशमात्रवृत्तिः । स द्विविधः । ध्वन्यात्मको वर्णात्मकश्च । तत्र ध्वन्यात्मको भेर्यादौ । वर्णात्मकः संस्कृतभाषादिरूपः ॥**

शब्दं निरूपयति—श्रोत्रग्राह्य इति । श्रोत्रेन्द्रियजन्यग्रहविषयगुणविभाजकधर्मवत्त्वमर्थः । भेर्याद्यवच्छेदेनोत्पन्नाच्छब्दाद्वीचितरङ्गन्यायेन कदम्बमुकुलन्यायेन वा श्रोत्रदेशे उत्पन्नः शब्दो गृह्यते । भेरीशब्दो मया श्रुत इत्यादिप्रतीतिर्भेर्याकाशसंयोगासमवायिकारणकशब्दजशब्दविषयकत्वेनोपपादनीया ।

**सर्वव्यवहारहेतुर्गुणो बुद्धिर्ज्ञानम् । सा च द्विविधा स्मृतिरनुभवश्च ॥**

बुद्धिं निरूपयति—सर्वव्यवहारेति । व्यवहारश्च बुबोधयिषापूर्वकवाक्यप्रयोगः । तत्र वाक्यार्थज्ञानं हेतुस्तदेव बुद्धिः । तथाच साक्षाद्व्यवहारजनकतावच्छेदकजातिमत्त्वमर्थः[1] । ज्ञानमिति लक्ष्यनिर्देशः । बुद्धिरीति बुद्धिपदार्थस्य ज्ञानाद्भेदनिरासाय । सा चेति । बुद्धिरित्यर्थः । द्विविधेति । स्मृतित्वानुभवत्वाभिन्नविभाजकधर्मद्वयान्यतरवतीत्यर्थः ।

---

[1] प्रयुज्यमानवाक्यजन्यवाक्यार्थज्ञानसमानविषयकज्ञानमित्यर्थः । नतु वाक्यजन्यं ज्ञानमनवस्थाप्रसङ्गात् ।

**संस्कारमात्रजन्यं ज्ञानं स्मृतिः । तद्भिन्नं ज्ञानमनुभवः । स द्विविधः । यथार्थोऽयथार्थश्च ॥**

स्मृतेर्लक्षणमाह—संस्कारमात्रजन्यमिति । स्मृतित्वं स्मरामी-त्यनुभवसिद्धो जातिविशेषः । तद्भिन्नं स्मृतिभिन्नमित्यर्थः । अनुभवं विभजते—स द्विविध इति ।

**तद्वति तत्प्रकारकोऽनुभवो यथार्थः । सैव प्रमेत्युच्यते ॥**

यथार्थानुभवं लक्षयति—तद्वतीति । अत्र तत्पदं प्रकारपरं सप्त-म्यर्थो विशेष्यत्वं विशेष्यित्वं वा तत्र तद्वतो निष्ठत्वेन निरूपितत्वेन वान्वयः । तत्प्रकारक इत्यस्य तन्निष्ठप्रकारतानिरूपितप्रकारिताया-नर्थः। तदेकदेशप्रकारतायां प्रकारितायां वा निरूपितत्वेनावच्छिन्नत्वेन वा सप्तम्यर्थस्यान्वयः । प्रकारता च तद्वत्तावच्छेदकसंबन्धावच्छिन्ना ग्राह्या । अन्यथा समवायेन वह्निमति वह्न्यवयवे संयोगेन वह्निप्रकारक-ज्ञानस्य याथार्थ्यापत्तिः । तेन सम्बन्धेन[1] तद्वन्निष्ठविशेष्यतानि-रूपितविशेष्यित्वावच्छिन्न[2]तत्संबन्धावच्छिन्नतन्निष्ठप्रकारतानिरूपितप्र-कारिताशालित्वे सत्यनुभवत्वं पर्यवसितार्थः । अयथार्थानुभववारणाय सत्यन्तं, स्मृतीच्छादिवारणायानुभवत्वनिवेशः । सैवेति । शास्त्रे यथार्थानुभवात्मिका या बुद्धिः सैव प्रमेत्युच्यते इत्यर्थः ।

**तदभाववति तत्प्रकारकोऽनुभवोऽयथार्थः ॥**

अयथार्थानुभवं लक्षयति—तदभाववतीति । तदभाववद्विशेष्य-कतत्प्रकारकानुभवोऽयथार्थानुभव इत्यर्थः । तथाच शुक्तौ 'इदं

---

१ तेन संबन्धेन तद्वानित्यन्वयः । अत्र तत्पदेन प्रकारतावच्छेदकसंबन्धस्य प्रकारस्य च ग्रहणम् ।

२ विशेष्यित्वावच्छिन्नेति प्रकारितान्वयि । ययोर्विषयतयोः परस्परं निरूप्यनिरूपकभावस्तन्निरूपितविषयितयोरेवावच्छेद्यावच्छेदकभाव इति नियमा-द्विशेष्यत्वप्रकारत्वयोर्निरूप्यनिरूपकभावो लभ्यत इति भावः । तत्फलं च रङ्गरजतयोरिमे रजतरङ्गे इति भ्रमेऽतिव्याप्तिवारणम् ।

रजतम्' इत्यादौ रजतत्वाभाववत्यां शुक्तौ रजतत्वप्रकारकज्ञानसत्त्वा-ल्लक्षणसमन्वयः। नच वृक्षः कपिसंयोगीति प्रमायामतिव्याप्तिः। अग्रे कपिसंयोगसत्त्वेपि मूले कपिसंयोगाभाववति वृक्षे कपिसंयोगप्र-कारकत्वादिति वाच्यम्। तदभावावच्छेदकावच्छेदेन तत्प्रकारकत्वमि-त्यस्य विवक्षितत्वात्। इत्थं च कपिसंयोगाभावावच्छेदकं मूलं तद-वच्छेदेन वृक्षे कपिसंयोगानवगाहित्वात्तादृशप्रमायां नातिव्याप्तिरिति भावः। तदभावश्च प्रकारतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताको ग्राह्यः। तेन न समवायसंबन्धावच्छिन्नप्रतियोगिताकवह्न्यभाववति पर्वते संयोगेन वह्निप्रकारकज्ञानस्यायथार्थतापत्तिः। ननु तथापि कालिकसंबन्धेन संयोगसंबन्धावच्छिन्नप्रतियोगिताकवह्न्यभाववति प-र्वते संयोगेन वह्न्यवगाहित्वेनोक्तप्रमायामतिव्याप्तिस्तदवस्थैवेति चेन्न। प्रकारतावच्छेदकसंबन्धेन तद्वत्ताग्रहं प्रति येन संबन्धेन तदभाववत्ता-निश्चयः प्रतिबन्धकस्तेन संबन्धेन तदभाववत्त्वस्य विवक्षितत्वात्। तथा च प्रकृते प्रकारतावच्छेदकसंयोगसंबन्धेन वह्निमत्ताग्रहं प्रति स्वरूप-संबन्धेन संयोगसंबन्धावच्छिन्नप्रतियोगिताकवह्न्यभाववत्तानिश्चयस्य प्रतिबन्धकतया स्वरूपसंबन्धस्यैव लक्षणघटकत्वात्तेन संबन्धेन तद-भाववान्पर्वतो न भवतीति नातिव्याप्तिः।

**यथार्थानुभवश्चतुर्विधः। प्रत्यक्षानुमित्युपमितिशाब्दभेदात्॥**

यथार्थानुभवं विभजते—यथार्थानुभव इति।

**तत्करणमपि चतुर्विधं प्रत्यक्षानुमानोपमानशब्दभेदात्॥**

प्रमाणसामान्यलक्षणं कुर्वंस्तानि विभजते—तत्करणमिति।

**असाधारणं कारणं करणम्॥**

करणज्ञानमन्तरेण प्रमाकरणज्ञानासंभवात् प्रकृतसिद्ध्यनुकूलचि-न्ताविषयत्वरूपोपोद्घातसंगत्या करणलक्षणमाह—व्यापारवदिति। व्यापारवत्त्वं जनकतासंबन्धेन। व्यापारलक्षणं च द्रव्यभिन्नत्वे सति तज्जन्यत्वे सति तज्जन्यजनकत्वम्। कारणतायामसाधारणत्वं च कार्य-

स्वव्याप्यधर्मावच्छिन्नकार्यतानिरूपितत्वम् । तथाच जनकतासंबन्धेन व्यापारवत्त्वे सति असाधारणकारणत्वं करणत्वमिति फलितम् ॥

**अनन्यथासिद्धकार्यनियतपूर्ववृत्तिकारणम् ॥**

करणज्ञानस्य कारणज्ञानाधीनत्वात्तल्लक्षणमाह—अनन्यथेति । अन्यथासिद्धत्वम् अवश्यक्लृप्तनियतपूर्ववर्तिनः कार्यसंभवे तत्सहभूतत्वं तद्भिन्नत्वं वा । नियतपूर्ववृत्तित्वं कार्याव्यवहितपूर्वक्षणावच्छिन्न-कार्याधिकरणनिरूपिता-धेयतावदभावप्रतियोगितानवच्छेदकधर्मवत्त्वम् । घटं प्रति दण्डत्वादेर्वारणायानन्यथासिद्धेति, रासभादिवारणाय विशेष्यदलम् ।

**कार्यं प्रागभावप्रतियोगि ॥**

कार्यं लक्षयति—कार्यमिति ।

**कारणं त्रिविधं समवाय्यसमवायिनिमित्तभेदात् । यत्समवेतं कार्यमुत्पद्यते तत्समवायिकारणम् । यथा तन्तवः पटस्य पटश्च स्वगतरूपादेः ॥**

कारणं विभज्य दर्शयति—कारणं त्रिविधमिति । समवायिकारणलक्षणमाह—यत्समवेतमिति । तथाच समवायेन कार्याधिकरणत्वमिति फलितोऽर्थः । तदेवोदाहृत्य दर्शयति—यथेति । यस्मिन् तन्तुषु समवायेन विद्यमान सन् पटः उत्पद्यते अतः पटं प्रति तन्तवः समवायिकारणमित्यर्थः । एवमन्यत्रापि लक्षणसमन्वयः स्वयं कार्य इति ।

**कार्येण कारणेन वा सहैकस्मिन्नर्थे समवेतं सत् कारणमसमवायिकारणम् । यथा तन्तुसंयोगः पटस्य । तन्तुरूपं पटरूपस्य ॥ तदुभयभिन्नं कारणं निमित्तकारणम् ।**

---

१ साधारणकारणानि ईश्वरस्तज्ज्ञानेच्छाकृतयः प्रागभावकालदिगदृष्टान्यष्टौ । तत्त्वं च कार्यत्वावच्छिन्नकार्यतानिरूपितकारणत्वम् ।

**यथा तुरीवेमादिकं पटस्य ॥ तदेतत्त्रिविधकारणमध्ये यदसाधारणं कारणं तदेव करणम् ॥**

असमवायिकारणं लक्षयति—**कार्येणेति** । कार्येण सह एकस्मिन्नर्थे, एवं कारणेन सह एकस्मिन्नर्थे समवेतत्वे सतीति योजना । अत्र कारणपदं समवायिकारणपरम् । उदाहरति—**यथेति** । तथाच समवाय-स्वसमवायिसमवायाऽन्यतरसंबन्धेन कार्यनियतपूर्ववृत्तित्व-रूपस्य तस्य तन्तुसंयोगे तन्तुरूपे च सत्त्वाल्लक्षणसमन्वयः । आत्म-विशेषगुणान्यत्वमपि लक्षणे प्रवेश्यम् । अन्यथा तत्रातिव्याप्तिः स्या-त्तेषां कुत्राप्यसमवायिकारणत्वाभावादिति भावः ।

**तत्र प्रत्यक्षज्ञानकरणं प्रत्यक्षम् ॥**

प्रासङ्गिकं समाप्य प्रत्यक्षप्रमाणलक्षणमाह—**तत्रेति** । तादृश-प्रमाणचतुष्टयमध्ये इत्यर्थः ।

**इन्द्रियार्थसंनिकर्षजन्यं ज्ञानं प्रत्यक्षम् । तद्द्विविधम् । निर्विकल्पकं सविकल्पकं चेति ॥**

प्रत्यक्षप्रमासामान्यलक्षणमाह—**इन्द्रियेति** । इन्द्रियं चक्षुरादि-कमर्थो घटादिस्तयोः संनिकर्षः संयोगादिः तज्जन्यं ज्ञानं प्रत्यक्षमि-त्यर्थः । तादृशसंनिकर्षध्वंसवारणाय ज्ञानमिति । अनुमित्यादिवार-णाय संनिकर्षान्तम् । **द्विविधमिति** । [अस्याः करणं त्रिविधम्—क्वचिदिन्द्रियं क्वचिदिन्द्रियार्थसंनिकर्षः क्वचिद् ज्ञानम् । तत्र इन्द्रियं निर्विकल्पकज्ञाने करणम् । आत्मा मनसा सह संयुज्यते मनः इन्द्रियेण इन्द्रियमर्थेनेति इन्द्रियाणां वस्तुप्रमाकारित्व-नियमात् । इन्द्रियार्थसंनिकर्षस्तु निर्विकल्पकज्ञानानन्तरं नामजात्या-दियोजनात्मके डित्थोऽयं श्यामोऽयमिति विशेषणविशेष्यभावावगा-हिसविकल्पकज्ञाने करणम् । तत्र निर्विकल्पकज्ञानमवान्तरव्यापारः, सविकल्पकज्ञानं फलम् । यदा च सविकल्पकज्ञानानन्तरं हानोपादा-नोपेक्षाबुद्धयो जायन्ते तदा निर्विकल्पकं ज्ञानं करणं, सविकल्पक-

मवान्तरव्यापारः, हानादिबुद्धयः फलमिति शेषः पूरणीयस्तर्कसंग्रहे ।]

**तत्र निष्प्रकारकं ज्ञानं निर्विकल्पकम् ॥**

निर्विकल्पकलक्षणमाह—निष्प्रकारकमिति । विशेषणविशेष्यसंबन्धानवगाहि ज्ञानमित्यर्थः ।

**सप्रकारकं ज्ञानं सविकल्पकम् । यथा डित्थोऽयं ब्राह्मणोऽयं श्यामोऽयमिति ॥**

सविकल्पकलक्षणमाह—सप्रकारकमिति । प्रकारितावदित्यर्थः । एवं संसर्गितावत्त्वं, विशेष्यितावत्त्वं वा तल्लक्षणं बोध्यम् । ननु निर्विकल्पकज्ञाने किं प्रमाणमितिचेन्न । अयं घटः अयं पट इत्यादिर्विशिष्टबुद्धिर्विशेषणज्ञानजन्या विशिष्टबुद्धित्वाद्दण्डीतिविशिष्टबुद्धिवदित्यनुमानस्यैव प्रमाणत्वात् ।

**प्रत्यक्षज्ञानहेतुरिन्द्रियार्थसंनिकर्षः षड्विधः । संयोगः संयुक्तसमवायः संयुक्तसमवेतसमवायः समवायः समवेतसमवायो विशेषणविशेष्यभावश्चेति ॥ चक्षुषा घटप्रत्यक्षजनने संयोगः संनिकर्षः ॥ घटरूपप्रत्यक्षजनने संयुक्तसमवायः संनिकर्षः । चक्षुःसंयुक्ते घटे रूपस्य समवायात् ॥ रूपत्वसामान्यप्रत्यक्षे संयुक्तसमवेतसमवायः संनिकर्षः । चक्षुःसंयुक्ते घटे रूपं समवेतं तत्र रूपत्वस्य समवायात् ॥ श्रोत्रेण शब्दसाक्षात्कारे समवायः संनिकर्षः । कर्णविवरवर्त्याकाशस्य श्रोत्रत्वाच्छब्दस्याकाशगुणत्वात् गुणगुणिनोश्च समवायात् ॥ शब्दत्वसाक्षात्कारे समवेतसमवायः संनिकर्षः । श्रोत्रसमवेते शब्दे शब्दत्वस्य समवायात् ॥ अभावप्रत्यक्षे विशेषणविशेष्यभावः संनिकर्षः । घटाभाववद्भूतलमित्यत्र चक्षुःसंयुक्ते भूतले घटाभावस्य विशेषणत्वात् ॥**

तादृशं वाक्यमर्थः। धूमपदं धूमव्यापके लाक्षणिकं तस्य वह्न्यावभेदेनान्वयः। इतिपदस्य बोध्यतार्थस्तस्याश्रयत्वसंबन्धेन साहचर्येनियमेऽन्वयः। तथाच धूमव्यापकवह्निसामानाधिकरण्यं हेतौ व्याप्तिरिति फलितम्। तद्व्यापकत्वं च तत्समानाधिकरणात्यन्ताभावाप्रतियोगित्वम्। तत्पदं हेतुपरम्। वह्निमान् धूमादित्यादौ हेतुर्धूमस्तदधिकरणं पर्वतः तन्निष्ठो योऽत्यन्ताभावः घटाभावः तत्प्रतियोगी घटः अप्रतियोगी वह्निस्तत्सामानाधिकरण्यं धूमेऽस्तीति लक्षणसमन्वयः। तथाच हेतुसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यं व्याप्तिरिति भावः। ननु कपिसंयोगी एतद्वृक्षत्वादित्याद्यव्याप्यवृत्तिसाध्यकसद्धेतावव्याप्तिः। एतद्वृक्षत्वसमानाधिकरणकपिसंयोगाभावप्रतियोगित्वस्यैव साध्ये सत्त्वादितिचेन्न। प्रतियोगिव्यधिकरणाभावस्यैव विवक्षितत्वात्। ननु वह्निमान् धूमादित्यादावव्याप्तिः हेतुसमानाधिकरणप्रतियोगिव्यधिकरणतत्तद्वह्न्यभावप्रतियोगित्वस्य साध्ये सत्त्वादितिचेन्न। तादृशप्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यस्य विवक्षितत्वात्। तथा चात्र तादृशाभावप्रतियोगितावच्छेदकं तत्तद्व्यक्तित्वमनवच्छेदकं साध्यतावच्छेदकं वह्नित्वमिति नाव्याप्तिः। ननु रूपत्वव्याप्यजातिमत्वान् पृथिवीत्वादित्यादौ साध्यतावच्छेदिका रूपत्वव्याप्यजातयस्तासां च शुक्लत्वादिरूपाणां चालनीन्यायेन नीलघटादिवृत्त्यभावप्रतियोगितावच्छेदकत्वादव्याप्तिरितिचेन्न, परंपरया रूपत्वव्याप्यजातित्वस्यैव तत्र साध्यतावच्छेदकत्वात्। तथाच न रूपत्वव्याप्यजातिमत्त्वावच्छिन्नाभावः क्वापि पृथिव्यां तिष्ठतीति नाव्याप्तिः। एवं दण्डिमान् दण्डसंयोगात् इत्यत्रापि तत्तद्दण्डवान्नास्तीत्यभावप्रतियोगितावच्छेदकत्वमेव तत्तद्दण्डस्येति तादृशप्रतियोगितानवच्छेदकस्य दण्डस्याप्रसिद्धत्वादव्याप्तिरतस्तत्रापि स्वाश्रयाश्रयत्वरूपपरंपरासंबन्धेन दण्डत्वमेव साध्यतावच्छेदकं वाच्यमतो नाव्याप्तिः। साध्यसाधनभेदेन व्याप्तेर्भेदात् विशि-

ष्टसाध्यतावच्छेदकस्थले तादृशाभावप्रतियोगितावच्छेदकतानवच्छेदकं साध्यतावच्छेदकतावच्छेदकमित्येवंघटितमेव लक्षणं, शुद्धसाध्यतावच्छेदकस्थले यथोक्तमेव लक्षणं वाच्यमिति न कश्चिद्दोषः । हेत्वधिकरणत्वं हेतुतावच्छेदकावच्छिन्नहेतुनिष्ठाधेयतानिरूपिताधिकरणत्वं वाच्यम् । तेन ज्ञानवान् मनोन्यत्वविशिष्टात्ममनःसंयोगादित्यादौ विशिष्टं शुद्धान्नातिरिच्यते इति नियमेन विशिष्टप्रकृतहेतोरनतिरिक्तस्यात्ममनःसंयोगस्याधिकरणे मनसि वर्तमानः प्रतियोगिव्यधिकरणो यो ज्ञानत्वावच्छिन्नाभावस्तदीयप्रतियोगितावच्छेदकत्वस्यैव साध्यतावच्छेदके ज्ञानत्वे सत्त्वेपि नाव्याप्तिः । हेतुतावच्छेदकतापर्याप्त्यधिकरणमनोन्यत्वात्ममनःसंयोगत्वैतदुभयावच्छिन्नाधेयतानिरूपिताधिकरणतावत्त्वस्यात्मन्येव सत्त्वेन तत्र तादृशाभावस्यासत्त्वात् ।

केचित्तु साध्याभाववदवृत्तित्वं व्याप्तिः साध्याभाववतो न वृत्तिर्यत्रेति व्यधिकरणबहुव्रीहिः । निरूपितत्वं षष्ठ्यर्थः तस्य वृत्तावन्वयः । तस्य च प्रतियोगित्वसंबन्धेनाभावेऽन्वयः । तथाच साध्याभावाधिकरणनिरूपितवृत्तित्वाभावो हेतौ व्याप्तिः । एवं च वह्निमान् धूमादित्यादौ साध्यो वह्निः तदभावो वह्न्यभावस्तदधिकरणं ह्रदः तन्निरूपितवृत्तित्वं शैवालादौ वृत्तित्वाभावो धूमेऽस्तीति लक्षणसमन्वयः । धूमवान् वह्नेरित्यादौ धूमाभावाधिकरणतप्तायःपिण्डनिरूपितवृत्तित्वस्यैव वह्नौ सत्त्वेन नातिव्याप्तिः । वृत्तित्वाभावश्च वृत्तित्वसामान्या-

१ वृत्तित्वसामान्याभावो नाम वृत्तित्वत्वरूपसामान्यधर्मावच्छिन्नप्रतियोगिताकोऽभावः । साध्यतावच्छेदकेतरानवच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगित्वसंबन्धावच्छिन्नावच्छेदकतानिरूपकाऽभावत्वेतरानवच्छिन्नाभावत्वावच्छिन्नस्वरूपसंबन्धावच्छिन्नावच्छेदकतानिरूपकाधिकरणत्वेतरानवच्छिन्नाधिकरणत्वावच्छिन्ननिरूपितत्वघटितसामानाधिकरण्यसम्बन्धावच्छिन्नावच्छेदकताकवृत्तित्वत्वपर्याप्तावच्छेदकताकप्रतियोगिताकाभाव इति यावत् । अत्रेत्यं प्रक्रिया—अभावप्रतीतावभावे यद्विशेषणं स प्रतियोगी तद्विशेषणं प्रतियोगितावच्छेदकं प्रतियोगितावच्छेदके यद्विशेषणं तत्प्रतियोगितावच्छेदकतावच्छेदकमित्यादिक-

भावो बोध्यः। तेन व्यभिचारस्थले धूमाभावाधिकरणजलह्रदनिरूपितवृत्तित्वाभावस्य धूमाभावाधिकरणनिरूपितवृत्तित्वघटैतदुभयाभावस्य च वह्नौ सत्त्वेऽपि नातिव्याप्तिः। साध्याभावश्च साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताको बोध्यः। तेन वह्निमान्

---

येन तत्तद्विशेषणतया भानस्य तन्निष्ठावच्छेदकतावच्छेदकत्वं बोध्यं, यत्र च न कस्यचिद्विशेषणतया भानं तन्निष्ठावच्छेदकता निरवच्छिन्नेत्युच्यते। एवं यद्विशेषणं विशेष्ये येन सम्बन्धेन वर्तते स सम्बन्धः तद्विशेषणनिष्ठावच्छेदकतावच्छेदकः। यथा प्रकृते—साध्याभावाधिकरणवृत्तित्वाभावप्रतीतौ अभावे विशेषणं वृत्तित्वं स प्रतियोगी प्रतियोगिनि वृत्तित्वे विशेषणं वृत्तित्वत्वं तत्प्रतियोगितावच्छेदकं वृत्तित्वत्वे च निरूपितत्वघटितसामानाधिकरण्येन विशेषणमधिकरणं, वृत्तित्वे निरूपितत्वेन अधिकरणस्य विशेषणत्वात्, तत्र च वृत्तित्वत्वस्य तस्याद्वृत्तित्वत्वाधिकरणयोः सामानाधिकरण्यात्। अतो वृत्तित्वत्वनिष्ठाया प्रतियोगितावच्छेदकताया अवच्छेदकताऽधिकरणे सा च निरूपितत्वघटितसामानाधिकरण्यावच्छिन्ना, उक्तरीत्या सामानाधिकरण्येन अधिकरणस्य वृत्तित्वत्वे विशेषणत्वात्। एवमभावोऽधिकरणे स्वरूपसम्बन्धेन तत्र च साध्यं प्रतियोगित्वेन तत्र च साध्यतावच्छेदकं साध्यतावच्छेदकतावच्छेदकसमवायादिना विशेषणम्। एवमधिकरणनिष्ठाया अभावनिष्ठायाश्चावच्छेदकताया अधिकरणत्वमभावत्वं चावच्छेदकं भवति अधिकरणे अभावे च तयोरपि विशेषणतया भानात्। अतोऽधिकरणनिष्ठाऽभावनिष्ठा चावच्छेदकता अधिकरणत्वेनाभावत्वेन चावच्छिन्ना भवति। अधिकरणतादौ न कस्यापि विशेषणतया भानाभावात्तन्निष्ठावच्छेदकता निरवच्छिन्नेत्युच्यते। अतोऽधिकरणत्वावच्छिन्नत्वस्य अधिकरणत्वनिष्ठनिरवच्छिन्नावच्छेदकतानिरूपितेत्यर्थः। इतरानवच्छिन्नत्वविशेषणं चाव्याप्त्यतिव्याप्तिवारणाय। एवञ्च प्रकृते—धूमाभावाधिकरणह्रदनिरूपितवृत्तित्वाभावीयप्रतियोगितावच्छेदके ह्रदस्य सामानाधिकरण्येन विशेषणतया भानात् प्रतियोगितावच्छेदकता ह्रदत्वावच्छिन्ननिरूपितत्वघटितसामानाधिकरण्यसम्बन्धावच्छिन्नावच्छेदकताका जाता नत्वधिकरणत्वावच्छिन्नतादृशसामानाधिकरण्यसम्बन्धावच्छिन्नावच्छेदकताकेति तादृशाभावस्युदासः। धूमाभावाधिकरणनिरूपितवृत्तित्वघटैतदुभयाभावीयप्रतियोगितावच्छेदकता च तादृशवृत्तित्वत्व–घटत्व–उभयत्वेतत्त्रितयपर्याप्ता न तु वृत्तित्वत्वपर्याप्तेति तद्व्युदासः। उक्तवृत्तित्वसामान्याभावपदेन तयोरग्रहणान्नातिव्याप्तिरिति भावः।

धूमादित्यादौ समवायेन वह्न्यभावस्य तद्वह्न्यभावस्य च पर्वतादौ सत्त्वेन तन्निरूपितवृत्तित्वाभावस्य धूमेऽसत्त्वेपि नाव्याप्तिः । साध्याभावाधिकरणत्वं च साध्यवत्ताग्रहप्रतिबन्धकतानियामकसंबन्धेन ग्राह्यम् । अन्यथा गुणत्ववान् ज्ञानत्वादित्यादौ विषयित्वादिसंबन्धेन साध्याभाववति ज्ञानादौ हेतोः सत्त्वेन तत्राव्याप्तिः स्यात् । नच स्वरूपेणैव साध्याभावाधिकरणत्वं विवक्ष्यतामिति वाच्यम् । घटत्वाभाववान् पटत्वादित्यादौ घटत्वरूपसाध्याभावस्य स्वरूपेणाधिकरणाप्रसिद्ध्याऽव्याप्तिप्रसङ्गात् । वृत्तित्वं च हेतुतावच्छेदकसंबन्धेन विवक्षणीयम् । तेन वह्न्यभावाधिकरणधूमावयवनिरूपितसमवायेन वृत्तित्वस्य धूमे सत्त्वेऽपि न वह्निमान्धूमादित्यादावव्याप्तिरित्याहुस्तत्र । सत्तावाञ्जातेरित्यादौ केवलान्वयिनि चाव्याप्तिप्रसङ्गात् । अतएव साध्यवद्भिन्नसाध्याभाववद्वृत्तित्वं, साध्यवत्प्रतियोगिकान्योन्याभावासामानाधिकरण्यं, सकलसाध्याभावाधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वं, साध्यवदन्यावृत्तित्वादिकमपि व्याप्तिलक्षणं परास्तम् ।

यत्तु सौन्दडाचार्याः—यत्समानाधिकरणाः साध्यतावच्छेदकाव-

---

१ साध्यवत्ताग्रहप्रतिबन्धकतानियामकसंबन्धेनेत्यस्य साध्यवत्ताग्रहप्रतिबन्धकतावच्छेदकीभूतसाध्याभावत्वावच्छिन्नप्रकारतावच्छेदकसंबन्धेनेत्यर्थः । समवायेन गुणत्ववत्ताबुद्धिंप्रति स्वरूपसंबन्धावच्छिन्न-गुणत्वाभावत्वावच्छिन्न-प्रकारताशालिनिश्चयत्वेन प्रतिबन्धकत्वाद्विषयतासंबन्धेन साध्याधिकरणत्वमादाय नाव्याप्तिरिति भावः ।

२ केवलान्वयिनीति । यद्रूपावच्छिन्नवृत्तितासामान्ये साध्याभावाधिकरणनिरूपितत्व-हेतुतावच्छेदसंबन्धावच्छिन्नत्वोभयाभावस्तद्रूपावच्छिन्नत्वं व्याप्तिरित्यर्थविवक्षायां सत्तावाञ्जातेरित्यत्राव्याप्तिवारणं भवति । यद्रूपपदेन हेतुतावच्छेदकस्य ग्रहणम् । प्रकृते जातित्वावच्छिन्नवृत्तितासामान्ये सत्ताभावाधिकरणनिरूपितत्व—समवायसंबन्धावच्छिन्नत्वोभयाभावसत्त्वाल्लक्षणसमन्वयः । अत्रोभयाभावः सत्ताभावाधिकरणनिरूपितत्वाभावप्रयुक्तो बोध्यः ॥ अतः केवलान्वयिनीति केवलान्वयिसाध्यकहेतौ इत्यर्थः । तत्र चाव्याप्तिः साध्याभावाप्रसिद्धिनिबन्धना बोध्या ।

च्छिन्नव्यापकतावच्छेदकप्रतियोगिताका यावन्तोऽभावाः प्रतियोगिसमानाधिकरणास्तत्त्वं व्याप्तिलक्षणम् । तथाच वह्निमान् धूमादित्यादौ धूमाधिकरणपर्वतादिवृत्तयो ये साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताका नाम साध्यतावच्छेदकावच्छिन्नवन्निष्ठाभावीयप्रतियोगितानवच्छेदकीभूतप्रतियोगितानिरूपका अभावा घटत्वेन वह्न्यभावादयो भवन्ति न तु वह्नित्वेन वह्न्यभावादयः । तथाहि प्रकृते साध्यतावच्छेदकं वह्नित्वं तदवच्छिन्नाधिकरणं पर्वतादि-स्तन्निष्ठो योऽभावः घटाभावीयप्रतियोगितावान्नास्तीत्येतादृशप्रतीतिसाक्षिकोऽभावः । न तु घटत्वेन वह्न्यभावीयप्रतियोगितावान्नास्तीत्यादिप्रतीतिसाक्षिका अभावास्तत्प्रतियोगितावच्छेदिका घटाभावीयप्रतियोगिता अनवच्छेदिका घटत्वेन वह्न्यभावीयप्रतियोगितादयः तादृशप्रतियोगिताकाः यावन्तोऽभावाः घटत्वेन वह्न्यभावादयः तत्प्रतियोगी वह्निस्तत्समानाधिकरणास्तत्त्वं धूमेऽस्तीति लक्षणसमन्वयः। धूमवान् वह्नेरित्यादौ हेतुसमानाधिकरण--साध्यव्यापकतावच्छेदकप्रतियोगिताक--धूमाभावस्यापि यावदन्तर्गतत्वात्तस्य च प्रतियोगिसामानाधिकरण्यं नास्तीति नातिव्याप्तिः। एवंचेदं वाच्यं ज्ञेयत्वादित्यादौ केवलान्वयिसाध्यकहेतौ समवायितया वाच्यत्वाभावस्य घटादौ प्रसिद्धत्वेन नाव्याप्तिः । अयमात्मा ज्ञानादित्यादौ आत्मत्वसामान्याभावस्य[१] साध्यव्यापकतावच्छेदकप्रतियोगिताकयावदभावान्तर्गतस्य आत्मनि प्रतियोग्यधिकरणे वृत्तित्वविरहादव्याप्तिः स्यादतः यत्समानाधिकरणा इति । यत्सामानाधिकरण्यं च यद्रूपावच्छिन्नसामानाधिकरण्यं वाच्यम् । अग्रेच[२] तत्त्वमित्यस्य तद्रूपावच्छिन्नत्वमित्यर्थः । तेन ज्ञाने साध्ये मनोत्यत्वविशिष्टात्ममनःसंयोगे नाव्याप्तिः । विशिष्टसत्तावान् जाते-

---

१ आत्मत्वाभावस्य ज्ञानसामानाधिकरण्याभावालक्षणाघटकतया प्रतियोगिसामानाधिकरण्याभावेऽपि न क्षतिरिति भावः ।

२ अग्रे अभावानां स्वविशिष्टहेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकर-

रित्यादौ विशिष्टसत्तायाः शुद्धसत्तानतिरेकितया सत्तारूपसाध्यव्यापकतावच्छेदकप्रतियोगिताकविशिष्टसत्ताभावस्य सत्तारूपप्रतियोगिसमानाधिकरणत्वादतिव्याप्तिरतः साध्यतावच्छेदकावच्छिन्नेति । तथाच यावदन्तर्गतस्य द्रव्यत्वसामान्याभावस्य प्रतियोग्यसमानाधिकरणत्वान्नातिव्याप्तिः । साध्यवत्त्वं च साध्यतावच्छेदकसंबन्धेन ग्राह्यम् । तेन ज्ञानवान् द्रव्यत्वादित्यादौ विषयतया ज्ञानाधिकरणघटादिवृत्त्यभावप्रतियोगितावच्छेदकप्रतियोगिताकत्वेनात्मत्वाभावस्य साध्यव्यापकतावच्छेदकप्रतियोगिताकत्वाभावेऽपि साध्यतावच्छेदकसमवायसंबन्धेन ज्ञानाधिकरणीभूतात्मवृत्त्यत्यन्ताभावप्रतियोगितानवच्छेदकप्रतियोगिताकत्वेन तथाविधयावदन्तर्गतस्य प्रतियोगिसामानाधिकरण्याभावान्नातिव्याप्तिः । साध्यवन्निष्ठाभावश्च प्रतियोगिव्यधिकरणो बोध्यः । तेन समवायितया वाच्यत्वाभावीयप्रतियोगित्वेन घटाभावमादाय नासंभवः । तच्च सामानाधिकरण्यघटितं ग्राह्यम् । अस्मिन्पक्षे अभाव इति स्वरूपकथनम् । वस्तुतस्तु साध्यवन्निष्ठाभावस्य तत्संब-

---

व्यस्य वक्तव्यतया, मनसि विशिष्टस्य शुद्धानतिरेकितयाऽऽत्ममनःसंयोगरूपहेतुसमानाधिकरणस्यात्मत्वसामान्याभावस्य साध्यव्यापकतावच्छेदकप्रतियोगिताकस्य, स्वविशिष्टहेत्वधिकरणे मनसि आत्मत्वरूपप्रतियोगिसामानाधिकरण्याभावेपीति शेषः । स्वविशिष्टहेतुतावच्छेदकावच्छिन्नाधिकरणावच्छेदेन तदुक्तौ तु स्वविशिष्टहेतुतावच्छेदकावच्छिन्नाधिकरणाप्रसिद्धावपीति शेषः । आत्मत्वसामान्याभावस्य मनोन्यत्वविशिष्टात्ममनःसंयोगाधिकरणे आत्मन्यवृत्तित्वेन लक्षणघटकत्वाभावादिति भावः ।

१ साध्यवन्निष्ठाभावीयप्रतियोगितानवच्छेदकप्रतियोगिताऽप्रसिद्धिनिबन्धन इति भावः ।

२ तत्संबन्धेन स्वावच्छिन्नाधिकरणसामान्यभिन्नसाध्यवन्निष्ठाभावप्रतियोगितावच्छेदको योयस्तदन्यत्वे सति तत्संबन्धावच्छिन्नाधेयतावच्छेदिका यदभावीयप्रतियोगिता तादृशा यावन्तोऽभावा इत्यादिरर्थः । स्वपदेन प्रतियोगितावच्छेदकत्वेनाभिमतस्य ग्रहणम् । तदन्याः प्रतियोगिता व्यापकतावच्छेदिका बोध्याः । तत्संबन्धेत्यत्र तत्पदेन व्यापकतावच्छेदकतयाभिमतः संबन्धो ग्राह्यः ।

न्धावच्छिन्नप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकत्वमेव तत्सं-
बन्धेन साध्यव्यापकतावच्छेदकत्वं वाच्यम् । तत्र साध्यवन्निष्ठत्वं
चाभावे स्वरूपसंबन्धेन । तेन स्पन्दो महाकालत्वादित्यादौ स्पन्दत्वा-
भावस्यापि कालिकसंबन्धेन स्पन्दे सत्त्वेन साध्यतावच्छेदकावच्छिन्न-
व्यापकतावच्छेदकप्रतियोगिताकत्वाभावेन यावदनन्तर्गतत्वात् समवा-
यितया वाच्यत्वाभावस्य च तादृशप्रतियोगिसामानाधिकरण्येऽपि नाति-
व्याप्तिः । इत्थंच जात्यभावाभावमादायासंभववारणाय अभावा इति
भावभिन्नार्थकम् । सर्वत्र गोत्वाद्यभावमादायासंभववारणाय साध्यता-
वच्छेदकेत्यादिदलम् । साध्यनिष्ठप्रतियोगिताका इत्युक्तौ महान-
सीयवह्न्यभावादिमादाय वह्निमान् धूमादित्याद्यनेकव्यक्तिसाध्यकेऽ-
व्याप्तिः स्यादतो व्यापकतावच्छेदकेत्यादिः । व्यभिचारिणि समवायि-
तया वाच्यत्वाद्यभावमादायातिव्याप्तिरतः यावन्त इति । प्रतियोगि-
सामानाधिकरण्यं च स्वविशिष्टहेत्वधिकरणावच्छेदेनेत्यपि बोध्यम् ।

---

१ वह्निमान्धूमादित्यादौ हेतुसमानाधिकरणो धूमाधिकरणवृत्तिर्यः जातिसा-
मान्याभावाभावः जातिरूपः । स उक्तसामानाधिकरण्येनानवच्छेदकत्वघटितव्याप-
कतावच्छेदकप्रतियोगिताको भवति । तथाहि—साध्यवति पर्वतादौ स्वरूपसंब-
न्धेन वर्तमानो घटाद्यभावीयप्रतियोगितावदभावः नतु जातिसामान्याभावाभावः
तस्य जात्यात्मकतया स्वरूपेणावृत्तित्वात्, तस्य (साध्यवन्निष्ठाभावस्य) संयोग-
संबन्धावच्छिन्नप्रतियोगितायाः सामानाधिकरण्येनावच्छेदिका घटसामान्याभावीय-
प्रतियोगिता अनवच्छेदिका जातिसामान्याभावाभावीयप्रतियोगिता तन्निरूपकत्वं
जातिसामान्याभावाभावस्येति । तस्य जातिसामान्याभावात्मकप्रतियोगिसामाना-
धिकरण्याभावादिति भावः ।

२ स्वविशिष्टेत्यादि । स्वविशिष्टेत्यस्य हेत्वधिकरणविशेषणत्वाद्विशेष्यानि-
वेशे विशेषणनिवेशनासंभवात्प्रथमं हेत्वधिकरणावच्छेदेनेत्यस्य प्रतियोगिसामाना-
धिकरण्यविशेषणतायाः फलमाह—प्रलयावृत्तीत्यादिना । कालत्वस्य प्रलयेऽपि-
वृत्तित्वात्तत्र च प्रलयावृत्तिधर्मस्य साध्यस्याभावात्, कालत्वं प्रलयावृत्तिधर्म-
साधने व्यभिचारि । प्रकृतलक्षणे प्रतियोगिसामानाधिकरण्ये हेत्वधिकरणावच्छे-
देनेत्यस्याविवक्षायां कालत्वसमानाधिकरण-प्रलयावृत्तिधर्मत्वावच्छिन्नव्यापकता-
वच्छेदकप्रतियोगिताकयावदभावान्तर्गतो यद्यपि साध्यसामान्याभावो भवति

तेन प्रलयावृत्तिधर्मवान् कालत्वादित्यादौ नातिव्याप्तिः । कपिसंयोगाभाववान् मेयत्वादित्यादौ संयोगादिस्वरूपसाध्याभावस्य सकलहेत्वधि-

---

तथापि तस्य महाकालान्तर्भावेण प्रतियोगिसामानाधिकरण्यादतिव्याप्तिः, प्रतियोगिसामानाधिकरण्यस्य हेत्वधिकरणावच्छेदेन विवक्षायां तु प्रलयकालस्यापि हेत्वधिकरणत्वात्तत्र च प्रलयावृत्तिधर्माभावाद्धेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्यं नास्तीति नातिव्याप्तिः । हेत्वधिकरणावच्छेदेनेत्यस्य यावद्धेत्वधिकरणेष्वित्यर्थकत्वात् ।

१ प्राचां मते संयोगसामान्याभावे साध्ये मेयत्वं द्रव्ये एव व्यभिचारि पृथिव्यादिषु मूर्तेषु सर्वावयवावच्छेदेन विभुसंयोगस्य सत्वात् तत्र संयोगसामान्याभावाभावादतः कपिपदम् । कपिसंयोगस्य सर्वत्राव्याप्यवृत्तित्वात् तदभावस्य सार्वत्रिकत्वेन केवलान्वयित्वात्तस्मिन्साध्ये न मेयत्वस्य व्यभिचारित्वमिति भावः ।

२ संयोगादिस्वरूपेति । प्रकृतलक्षणे साध्यव्यापकता प्रतियोगिवैयधिकरण्यघटितैव निवेशितेत्यभिप्रायेणेदम् । साध्यव्यापकता प्रतियोगिवैयधिकरण्यघटितेत्यस्य साध्य( साध्यतावच्छेदकावच्छिन्न )समानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकत्वरूपसाध्यव्यापकतावच्छेदकत्वघटकात्यन्ताभावः प्रतियोगिवैयधिकरण्येन विशेषित इत्यर्थः । इदं संयोगस्य साध्यव्यापकतावच्छेदकप्रतियोगिताकत्वाभिधानम् । अन्यथा ( प्रतियोगिवैयधिकरण्याघटितव्यापकत्वनिवेशे ) साध्यसमानाधिकरणात्यन्ताभावपदेन संयोगाभावाभावीयप्रतियोगितावदभावस्य संयोगात्मकस्यापि ग्रहीतुं शक्यत्वात् संयोगाभावनिष्ठप्रतियोगितायाः साध्यव्यापकतानवच्छेदकत्वेन, लक्षणघटकतादृशयावदनन्तर्गतत्वेन संयोगात्मकस्य साध्याभावस्य तमादायाव्याप्तिकथनासंगतिप्रसङ्गात् । प्रतियोगिवैयधिकरण्यघटितव्यापकत्वनिवेशे तु संयोगात्मकस्याभावस्य द्रव्यान्तर्भावेण संयोगसामान्याभावरूपप्रतियोगिसामानाधिकरण्येन वैयधिकरण्याभावात् व्यापकताघटकात्यन्ताभावपदेन ग्रहीतुमशक्यत्वात्संयोगाभावनिष्ठप्रतियोगितायाः साध्यव्यापकतावच्छेदकत्वेन संयोगात्मकसाध्याभावमादायाव्याप्तिकथनं संगच्छते । ननु द्रव्ये संयोगसामान्याभावमनङ्गीकुर्वतां प्राचीनानां मतेन कपिपदमित्युक्तं प्रागधुना च संयोगात्मकाभावस्य प्रतियोगिसामानाधिकरण्यात् व्यापकतायां च प्रतियोगिव्यधिकरणाभावस्य निवेशाद्व्यापकताघटकाभावपदेन तस्य ग्रहणासंभवः इति कथमुच्यत इतिचेत्, कपिपदसार्थक्योपपादनमात्रपरं तत् नत्वग्रिमग्रन्थस्यापि प्राचीनमतीयत्वपरं, वृक्षादिपृथिव्यादिषु शाखादितत्तदवयवावच्छिन्नवृत्तिसंयोगं प्रति तत्तदवयवत्वेन हेतुत्वस्यावश्यकतया वृक्षादौ व्याप्यवृत्तिसंयोगस्यासंभवात्

करणावृत्तित्वादव्याप्तिरतः स्वविशिष्टेति प्राहुस्तत्तुच्छम् । व्यधिकरणधर्मावच्छिन्नाभावस्याप्रामाणिकत्वात् । प्रतियोग्यवृत्तिधर्मस्य प्रतियोगितानवच्छेदकत्वात् । अतएव वृत्तिमद्वृत्तयो यावन्तः साध्याभाववत्तद्वृत्त्यधिकरणवृत्तित्वाभावास्तद्वत्त्वमित्यादिकमपि व्याप्तिलक्षणं निरस्तमित्यलं बहुविस्तरेण । एवं च साहचर्यनियमो व्यापकसामानाधिकरण्यं प्रतियोगिव्यधिकरणहेतुसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यरूपमिति फलितम् ॥

**व्याप्यस्य पर्वतादिवृत्तित्वं पक्षधर्मता ॥**

ननु का नाम पक्षधर्मतेत्यत आह—**व्याप्यस्येति** । धूमादेरित्यर्थः । **पक्षधर्मतेति** । ननु किं नामपक्षत्वं नच संदिग्धसाध्यवत्त्वं तद्धि संदेहविषयीभूतसाध्यवत्त्वरूपं जलं विनष्टवह्निमदित्यादौ तादृशसाध्याभावेन अव्याप्तम् । नच प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारिताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावान् यः संशयः स पक्षता । तथाच वह्निमान् धूमादित्यादौ तादृशनिश्चयत्वं पर्वतो वह्निमान् इत्याकारकनिश्चयत्वं तदव-

---

न्यतरस्यानुपादेयत्वात् । अथवा ( लक्षणे प्रतियोगिवैयधिकरण्यघटितव्यापकत्वनिवेशे द्रव्ये संयोगसामान्याभावमनङ्गीकर्तृमते च ) गगनत्वादिविशिष्टवाच्यत्वाद्यभाव—गगनत्ववाच्यत्वोभयत्वावच्छिन्नाभावादेर्योवदन्तर्गतस्य च हेत्वधिकरणीभूतगगनावच्छेदेन प्रतियोग्यसमानाधिकरणत्वादव्याप्तिरतः स्वविशिष्टपदम् । एतदभिप्रायेणैव 'संयोगादिस्वरूप' इत्यत्रादिपदम् । स्वपदं साध्यव्यापकतावच्छेदकप्रतियोगिताकाभावपरम् । इति संक्षेपः ।

१ अभावप्रत्ययस्य घटत्वादिविशिष्टघटादेः प्रतियोगित्वावगाहितया विशिष्टवैशिष्ट्यबुद्धित्वात् विशेषणतावच्छेदकविशिष्टज्ञानस्य विशिष्टवैशिष्ट्यप्रत्ययहेतुत्वात् तद्यदि अभावो व्यधिकरणधर्मेण विशिष्टं प्रतियोगिनं नावगाहते तर्हि व्यधिकरणधर्मस्यापि प्रतियोगितावच्छेदकत्वं नावगाहेत । यद्यवगाहते व्यधिकरणधर्मेण विशिष्टं प्रतियोगिनं तर्हि स भ्रम एवेति भावः । व्यधिकरणेत्यस्य प्रतियोग्यवृत्तिरर्थः ।

च्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावान् संशयः पर्वतो वह्निमान् न वेति स एव पक्षता निष्पन्ना । पक्षधर्मिकसाध्यवत्तानिश्चयनिवर्त्यत्वं बाधेऽप्यस्तीत्यतः संशयपदं तादृशनिश्चयाप्रतिबन्धकत्वार्थकम् । तथाच तादृशनिश्चयनिवर्त्यत्वे सति तादृशनिश्चयप्रतिबन्धकतावच्छेदकविषयताशून्यज्ञानत्वं फलितार्थः । तेन निर्वह्निः पर्वतो रूपवान् नवेति संशयात्मकबाधनिश्चयस्य पूर्वोक्तलक्षणवत्त्वेपि नातिप्रसङ्ग इति वाच्यम् । एवमपि यत्र सिद्धिकाले सिषाधयिषावशादनुमितिर्जायते तत्र तादृशसंशयरूपपक्षताया असत्त्वेनानुमित्यनुपपत्तेः । अत्रोच्यते—सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता । यत्र सिषाधयिषा नास्ति सिद्धिरपि नास्ति तत्र सुतरां सिद्ध्यभावान्न पक्षताविरहः । यत्र सिद्धिरस्ति सिषाधयिषा च वर्तते—तत्र सिद्ध्यभावस्य असत्त्वात्पक्षतासंपादनाय विशिष्टान्तं विशेषणम् । तथाच सिद्धिसत्त्वेऽपि सिषाध-

---

१ प्रतिबन्धकत्वं निवर्तकत्वम् ।

२ निवर्त्यत्वं प्रतिबध्यत्वम् ।

३ नातिप्रसङ्ग इति । अयं भावः—बाधज्ञाने पक्षतालक्षणगमने बाधज्ञानोत्तरमनुमित्यापत्तिरेवातिप्रसङ्गः । स च बाधज्ञानोत्तरमनुमितिर्न भवति सेदानीं बाधज्ञानस्य पक्षतात्वे भवेदिति । नचेदं संभवति बाधज्ञानस्य ग्राह्याभावावगाहित्वमुद्रयाऽनुमितिं प्रति प्रतिबन्धकत्वेन तदुत्तरमनुमित्यनुत्पादसिद्धेः, तस्मात्पक्षधर्मिकसाध्यवत्तानिश्चयनिवर्त्यत्वमेव लक्षणमस्तु किं संशयग्रहणेनेति चेन्न । बाधनिश्चयेऽपि यदा तत्राप्रामाण्यसंशयो भवति तदा तस्य प्रतिबन्धकत्वाभावात् सिद्ध्यात्मकपरामर्शादनुमित्यापत्तिरूपातिप्रसङ्गस्य दुर्वारत्वात् । अप्रामाण्यज्ञानानास्कन्दितस्यैव बाधनिश्चयस्य प्रतिबन्धकत्वात् । तस्मात्तद्वारणार्थं निरुक्तार्थकं संशयपदम् । एवं च निर्वह्निः पर्वतो रूपवान्नवेति ज्ञानस्य निर्वह्निपर्वतांशे संदिग्धाप्रामाण्यकत्वे पर्वतधर्मिकवह्निसाध्यकपक्षतात्वापत्त्या तादृशज्ञानोत्तरं सिद्ध्यात्मकपरामर्शात्पर्वतधर्मिकवह्निसाध्यकानुमित्यापत्तिरूपातिप्रसङ्गो न, संदिग्धाप्रामाण्यकबाधज्ञानस्य पक्षधर्मिकसाध्यवत्ताज्ञानाप्रतिबन्धकत्वेऽपि तत्प्रतिबन्धकतावच्छेदकविषयतावत्त्वात्तच्छून्यत्वघटितपक्षतालक्षणानाक्रान्तत्वेन तदापादकत्वाभावात् ।

४ सिषाधयिषाविरहः सिषाधयिषाभावस्तद्विशिष्टा या सिद्धिः पक्षविशेष्यकसाध्यप्रकारकनिश्चयस्तदभाव इत्यर्थः ।

यिषाविरहविशिष्टसिद्धेरभावात्तानुपपत्तिलेशोऽपीति बोध्यम् । सिषाधयिषा च प्रकृतपक्षतावच्छेदकविशिष्टपक्षविशेष्यकप्रकृतसाध्यतावच्छेदकविशिष्टसाध्यप्रकारकानुमितिविषयिणीच्छा तेन यत्किंचिद्विषयकं ज्ञानं जायतामितीच्छासत्त्वेपि सिद्धौ सत्यां न अनुमित्यापत्तिः । किंतु पर्वतो वह्निमानित्यनुमितिर्जायतामित्याकारकसिषाधयिषासत्त्व एव अनुमितिर्जायते । अत्र लिङ्गविषयकत्वेनापि नियन्त्रिता पक्षता ग्राह्या । तेन धूमेनानुमिनुयामितीच्छायामालोकलिङ्गकपरामर्शोत्सिद्धिकाले नानुमितिप्रसङ्ग इत्यलं पल्लवितेन ।

अनुमानं द्विविधं । स्वार्थं परार्थं च ।

अनुमानं विभजते—अनुमानमिति ।

स्वार्थं स्वानुमितिहेतुः । तथाहि—स्वयमेव भूयोदर्शनेन यत्र यत्र धूमस्तत्र तत्राग्निरिति महानसादौ व्याप्तिं गृहीत्वा पर्वतसमीपं गतस्तद्गते चाग्नौ संदिहानः पर्वते धूमं पश्यन् व्याप्तिं स्मरति 'यत्र यत्र धूमस्तत्राग्निः' इति । तदनन्तरं वह्निव्याप्यधूमवानयं पर्वत इति ज्ञानमुत्पद्यते । अयमेव लिङ्गपरामर्श इत्युच्यते । तस्मात्पर्वतो वह्निमानिति ज्ञानमनुमितिरुत्पद्यते । तदेतत्स्वार्थानुमानम् ॥

स्वार्थानुमानलक्षणमाह—स्वार्थं स्वेति । तथाच स्वार्थानुमितित्वावच्छिन्नहेतुरित्यर्थः । तदुपसंहरति—तदेतदिति ।

यत्तु स्वयं धूमादग्निमनुमाय परं प्रति बोधयितुं पञ्चावयववाक्यं प्रयुज्यते तत्परार्थानुमानम् । यथा पर्वतो वह्निमान् । धूमवत्त्वात् । यो यो धूमवान्स स वह्निमान् यथा महानसम् । तथा चायम् । तस्मात्तथेति । अनेन प्रतिपादिताल्लिङ्गात्परोऽप्यग्निं प्रतिपद्यते ॥

परार्थानुमानलक्षणमाह—यत्त्विति । अत्र तदिति सपञ्चमीकमव्ययं, प्रयोज्यत्वं पञ्चम्यर्थः । पञ्चावयववाक्यप्रयोज्यमित्यर्थः । पञ्चावयववाक्यप्रयोज्यत्वं च पञ्चावयववाक्यजन्यमहावाक्यार्थबोधजन्यत्वम् । पञ्चावयववाक्यान्याह—यथेति । 'पर्वतो वह्निमान्' इत्यत्र वह्निमतोऽभेदेन पर्वतेऽन्वयाद् वह्निमदभिन्नः पर्वत इति बोधः । 'धूमवत्त्वात्' इत्यत्र पञ्चम्यर्थो ज्ञानजन्यज्ञानविषयत्वं प्रथमज्ञाने धूमस्यान्वयात् धूमज्ञानजन्यज्ञानविषयत्वमिति बोधः । 'यो यो धूमवान् स स वह्निमान् यथा महानसम्' अत्र द्विरुक्ततच्छब्दसमभिव्याहृतवह्निपदस्य धूमव्यापकवह्नौ निरूढलक्षणा । यत्तत्पदे तात्पर्यग्राहके । धूमवत्पदार्थस्य महानसपदार्थेऽन्वयः । धूमवदन्वितमहानसपदार्थे वह्निमत्पदार्थस्याभेदेनान्वयस्तादृशान्वयतात्पर्यग्राहकत्वमेव यथेति पदस्य । तथाच धूमवन् महानसं धूमव्यापकवह्निमदित्यन्वयबोधः धूमवन्महानसमित्यस्यैकदेशो धूमवति वह्निमतो भानेन धूमव्यापकवह्निसमानाधिकरणधूमवन्महानसमिति पर्यवसितो बोधः । 'तथाचायम्' तथेत्यस्य धूमवानित्यर्थः । अयमिति सन्निकृष्टवर्तिपदार्थपर्वतबोधकम् । ततो वह्निव्याप्यधूमवान् पर्वत इति बोधः । 'तस्माचथा' व्याप्तिविशिष्टपक्षधर्मताविशिष्टधूमस्तत्पदार्थः । तथाच व्याप्तिपक्षधर्मताविशिष्टधूमज्ञानज्ञाप्यवह्निमदभिन्नः पर्वत इति बोधः । उपसंहरति—अनेनेति ।

प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि पञ्चावयवाः । पर्वतो वह्निमानिति प्रतिज्ञा ॥ धूमवत्त्वादिति हेतुः । यो यो धूमवान् स स वह्निमानित्युदाहरणम् । तथा चायमित्युपनयः । तस्मात्तथेति निगमनम् ॥ स्वार्थानुमितिपरार्थानुमित्योर्लिङ्गपरामर्श एव करणम् । तस्माल्लिङ्गपरामर्शोऽनुमानम् ॥

अवयवान्विभजते—प्रतिज्ञेत्यादिना । अवयवत्वं न्यायान्तर्गतत्वे सति प्रतिज्ञाद्यन्यतमत्वम् । किं तावत्प्रतिज्ञात्वमिति चेदत्र

व्याप्तिग्रहः इति चेन्न । व्यभिचारज्ञानविरहसहकृतसहचारज्ञानस्यैव व्याप्तिग्राहकत्वात् । ननु धूमाग्न्योर्निरुपाधिकव्याप्तिग्रहः कथं ज्ञात इति चेन्न । यद्यत्र कश्चिदुपाधिः स्यात् तर्हि उपलभ्येत नोपलभ्यते अतो दर्शनाभावान्नास्तीति तर्कसहकारिणानुपलम्भसनाथेन-प्रत्यक्षेणैवोपाध्यभावस्यावधारणात् । तथाह्युपाध्यभावग्रहणजनितसंस्कारसहकृतेन भूयोदर्शनेन संस्कारसहकृतेन साहचर्यग्राहिणा प्रत्यक्षेणैव धूमाग्न्योर्व्याप्तिरवधार्यते । अतो धूमाग्न्योः स्वाभाविक एव संबन्धः नत्वौपाधिकः । तथाचानेन न्यायेन धूमाग्न्योर्व्याप्तौ गृह्यमाणायां यद्धूमज्ञानं महानसे जायते तत्प्रथमम् १ पर्वतादौ धूमज्ञानं द्वितीयं २ ततः महानसादौ गृहीतां धूमाग्न्योर्व्याप्तिं स्मृत्वा पर्वते पुनर्धूमं परामृशति अस्त्यत्र पर्वते वह्निव्याप्याश्रयो धूम इति तदिदं धूमज्ञानं तृतीयं ३ अयमेव लिङ्गपरामर्शः । अनुमितिकरणत्वाच्चानुमानमित्यर्थः ।

**लिङ्गं त्रिविधम् । अन्वयव्यतिरेकि केवलान्वयि केवलव्यतिरेकि चेति । अन्वयेन व्यतिरेकेण च व्याप्तिमदन्वयव्यतिरेकि । यथा वह्नौ साध्ये धूमवत्त्वम् । यत्र धूमस्तत्राग्निर्यथा महानसमित्यन्वयव्याप्तिः । यत्र वह्निर्नास्ति तत्र धूमोऽपि नास्ति यथा ह्रद इति व्यतिरेकव्याप्तिः ॥**

लिङ्गं विभजते—**लिङ्गमिति** । अन्वयव्यतिरेकिणो लक्षणमाह—**अन्वयेनेति** । प्रयोज्यत्वं तृतीयार्थः । साध्यसाधनयोः साहचर्यमन्वयः । तदभावयोः साहचर्यं व्यतिरेकः । तथाचान्वयप्रयोज्यव्यतिरेकप्रयोज्यव्याप्तिमदन्वयव्यतिरेकीत्यर्थः । उदाहरति—**यथेति** । महानसे धूमाग्न्योरन्वयसद्भावस्य दर्शनादित्यर्थः । अथवशाद्विभक्तेर्विपरिणाम इति भावः । **महाह्रद इति** । अत्रापि तयोर्व्यतिरेकसद्भावदर्शनादिति योजनीयमिति भावः । अत्रेदं बोध्यम् । अन्वयव्याप्तौ यो व्याप्यस्तदभावोऽत्र व्यापकः । यथा यत्र धूमस्त-

त्राग्निरित्यन्वयव्याप्तौ धूमो व्याप्यः तस्यैवाभावः यत्राग्निर्नास्ति तत्र धूमो नास्तीति व्यतिरेकव्याप्तौ व्यापको जातः । यश्च व्यापकः यथा वह्निः तस्याभावस्तु पुनरत्र व्याप्य इति । तदुक्तं—

व्याप्यव्यापकभावो हि भावयोर्यादृगिष्यते ।
तयोरभावयोस्तस्माद्विपरीतः प्रतीयते ॥
अन्वये साधनं व्याप्यं साध्यं व्यापकमिष्यते ।
साध्याभावोऽन्यथा व्याप्यो व्यापकः साधनात्ययः ॥ इति ।

तदेवं धूमवत्त्वे हेतौ अन्वयेन व्यतिरेकेण व्याप्तिरस्त्यतो धूमवत्त्वमन्वयव्यतिरेकव्याप्तिमज्ज्ञातमिति सिद्धम् ।

**अन्वयमात्रव्याप्तिकं केवलान्वयि । यथा घटोऽभिधेयः प्रमेयत्वात्पटवत् । अत्र प्रमेयत्वाभिधेयत्वयोर्व्यतिरेकव्याप्तिर्नास्ति सर्वस्यापि प्रमेयत्वादभिधेयत्वाच्च ॥**

केवलान्वयिनो लक्षणमाह—**अन्वयमात्रेति** । मात्रपदेन व्यतिरेकव्यवच्छेदः । तथाच व्यतिरेकाप्रतियोगिसाध्यकत्वे सत्यन्वयव्याप्तिमत्त्वं केवलान्वयित्वमित्यर्थः । उदाहरति—**यथा घट इति** । तयोर्व्यतिरेकव्याप्तिं निराकरोति—**अत्रेति** ।

**व्यतिरेकमात्रव्याप्तिकं केवलव्यतिरेकि । यथा पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वात् । यदितरेभ्यो न भिद्यते न तद्गन्धवत् । यथा जलम् । न चेयं तथा । तस्मान्न तथेति । अत्र यद्गन्धवत् तदितरभिन्नमित्यन्वयदृष्टान्तो नास्ति । पृथिवीमात्रस्य पक्षत्वात् ।**

केवलव्यतिरेकिणो लक्षणमाह—**व्यतिरेकमात्रेति** । व्यतिरेकयोरेव व्याप्तिग्रहो यत्र तदिति विग्रहः । उदाहरति—**यथा पृथ्वीति** । इयं पृथ्वी न तथा न गन्धाभाववतीत्यर्थः । तस्मात् गन्धवत्त्वान्न तथा इतरभेदाभाववती किंतु इतरभेदवतीत्यर्थः ।

अन्वयव्याप्तिं परिहरति—अत्रेति । पृथ्वीमात्रस्य पक्षत्वादिति । एवमन्यत्रापि जीवच्छरीरं सात्मकं प्राणादिमत्त्वात् यत्सात्मकं न भवति तत्प्राणादिमन्न भवति यथा घटः नचेह जीवच्छरीरं तथा तस्मान्न तथेति । अत्र यत्प्राणादिमत्तत्सात्मकमित्यन्वयदृष्टान्ताभावादित्यादिकं ज्ञातव्यम् ।

अत्रान्वयव्यतिरेकि पक्षधर्मत्व-सपक्षसत्त्व-विपक्षासत्त्व-अबाधितत्व-असत्प्रतिपक्षत्वात्मकपञ्चरूपोपपन्नमेव साध्यं साधयति । तथा हि—पर्वतस्य धूमवत्त्वं धर्मोऽतोहेतोर्धूमस्य पक्षधर्मत्वं, सपक्षे महानसे वर्तमानत्वं सपक्षसत्त्वं, विपक्षे ह्रदादावविद्यमानत्वं विपक्षासत्त्वं, वह्न्यभावसाधकहेत्वन्तरप्रयुक्तबाधशून्यत्वमसत्प्रतिपक्षत्वम्, एवं वह्न्यभावश्च केनापि न सिद्धः इत्यबाधितत्वं संभवति । पञ्चरूपवत्त्वात् धूमवत्त्वं हेतुः वह्निं साधयति । ततश्च हेतोः पक्षवृत्तित्वाद्धेतोरपि तद्वृत्तित्वं सिध्यतीति भावः । तथाचोक्तम्—अनुमानस्य द्वयं सामर्थ्यं व्याप्तिः पक्षधर्मता च । तत्र व्याप्त्या साध्यसिद्धिः पक्षधर्मतया साध्यस्य पक्षसंबन्धित्वविशेषसिद्धिरिति । एवं केवलान्वयि विपक्षासत्त्वभिन्नचतूरूपोपपन्नमेव साध्यं साधयति । केवलव्यतिरेकि च सपक्षसत्त्वभिन्नचतूरूपसंयुक्तमेव साध्यं साधयतीति ज्ञातव्यमिति दिक् ।

संदिग्धसाध्यवान् पक्षः । यथा धूमवत्त्वे हेतौ पर्वतः ॥

के पुनः पक्षसपक्षविपक्षा इति विभागपूर्वकं तांल्लक्षयन् प्रथमं पक्षं लक्षयति—संदिग्धेत्यादिना । संदिग्धं साध्यं यत्रेति विग्रहः । तमुदाहरति—यथेति ।

निश्चितसाध्यवान् सपक्षः । यथा तत्रैव महानसम् ॥

सपक्षलक्षणमाह—निश्चितेति । अत्रापि समासः पूर्ववत् । उदाहरति—यथा तत्रैवेति ।

निश्चितसाध्याभाववान् विपक्षः । यथा तत्रैव महाह्रदः ॥

विपक्षलक्षणमाह—निश्चितसाध्याभावेति । उदाहरति—यथा तत्रैव महाह्रद इति ।

**सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधिताः पञ्च हेत्वाभासाः ॥**

सद्धेतुं[1] निरूप्य प्रसङ्गसङ्गत्याऽसद्धेतून् निरूपयति—सव्यभिचारेत्यादिना । हेतुवदाभासन्ते ये ते हेत्वाभासाः । दुष्टहेतव इत्यर्थः । तथाच अनुमितिप्रतिबन्धकयथार्थज्ञानविषयत्वं हेत्वाभासलक्षणम्[2] । अनुमिति· ह्रदो वह्निमानित्याकारिका तन्निष्ठा या प्रतिबध्यता ह्रदत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्न-

---

१ सद्धेतुमिति । व्याप्तिपक्षधर्मताविशिष्टो हेतु सद्धेतु । तस्य यन्निरूपण प्रतिपत्त्यनुकूलो व्यापार तदुत्तरकालीन यत्प्रसङ्गसङ्गतिप्रयोज्यमसद्धेतुनिरूपणं तदनुकूलकृतिमान्ग्रन्थकार इत्यर्थ । अत्र सद्धेतुनिरूपणस्यासद्धेतुनिरूपणे प्रसङ्गसङ्गतिनिर्वाहकमसद्धेतुस्मारक सद्धेतुविरुद्धत्व व्याप्तिपक्षधर्मताविरहस्वरूप सम्बन्धो बोध्य । सम्बन्धविधया 'एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकम्' इतिप्रकारेण स्वविरुद्धत्वरूपसम्बन्धवतो सदसद्धेत्वोर्मध्ये एकस्य सद्धेतोर्निरूपणे तत्प्रतिपत्तावपरसम्बन्धिनोऽसद्धेतो स्मरण भवति । ततोऽसद्धेतव के इति शिष्यस्य जिज्ञासा भवति । सैवासद्धेतूना निरूपणे प्रयोजिका । एव सद्धेतुनिरूपणानन्तरमसद्धेत्वभिधानप्रयोजिका या जिज्ञासा 'असद्धेतव के' इति तज्जनक ज्ञान सम्बन्धविधयाऽसद्धेतुस्मरणरूप, तद्विषयत्व यदसद्धेतुषु तदेव सङ्गति । तस्या प्रसङ्गत्व च तत्त्वनिर्णयविजयप्रयोजकत्वरूपप्रयोजनवत्त्वेनोपेक्षानर्हत्वादुक्तप्रकारेण स्मृतिविषयत्वाच्च तदाश्रयाणा बोध्यम् ।

२ हेतोराभासा हेत्वाभासा इतिव्युत्पत्त्या हेतुदोषाणा लक्षणमित्यर्थ । तद्वत्त्व च दुष्टहेतूनामिति भाव । तेन बाधादिज्ञानस्य हेतुविषयकतया तत्रस्यहेतावव्याप्तिरित्यपास्तम् । तद्वत्त्व च एकज्ञानविषयत्वविशिष्टप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन बोध्यम् । तेन ह्रदो वह्निमान् धूमादित्यादौ वह्न्यभाववद्ध्रदादिरूपदोषस्य धूमादिवृत्तित्वासम्भवात् कालिकादिसम्बन्धेन तद्वत्त्वसम्भवेऽपि तस्यातिप्रसञ्जकत्वात् ( ह्रदे धूमेन वह्निसाधने घटो दुष्ट इत्यादिव्यवहारप्रसञ्जकत्वात् ) व्यभिचारभिन्नेषु दोषवत्त्व दुर्घटमित्याशङ्का परास्ता । एकज्ञान च दोष–हेतूभयविषयक समूहालम्बनात्मक बोध्यम् । यथा 'वह्न्यभाववान्ह्रदो धूमश्च' इत्यादि ।

प्रकारिताशालिबुद्धित्वावच्छिन्ना प्रतिबध्यता तन्निरूपिता या वह्न्यभावत्वावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकता तच्छालि ययथार्थज्ञानं 'वह्न्यभाववान् ह्रदः' इत्याकारकं तद्विषयत्वस्य वह्न्यभाववद्ध्रदे सत्त्वाल्लक्षणसमन्वयः। नन्वनुमितिपदस्य यत्किंचिदनुमितिपरत्वे वह्न्यभाववद्ध्रदे लक्षणसमन्वये कर्त्तव्ये घटो वह्निमानित्यनुमितिमादाय वह्न्यभाववद्घटादावतिव्याप्तिः स्यात्। अनुमितिसामान्यपरत्वे अनुमितिसामान्यनिष्ठैका प्रतिबध्यताऽप्रसिद्धेरत्यसंभवः स्यादितिचेन्न। अनुमितिपदेन प्रकृतपक्षसाध्यहेतुकानुमितित्वस्य विवक्षितत्वात्। तथाच न कोऽपि पूर्वोक्तदोष इति ध्येयम्। नचानुमितिपदस्यैतादृशानुमितिपरत्वेऽपि व्यभिचारादावव्याप्तिर्धूमाभाववद्वृत्तिर्वह्निरित्याकारकस्य व्यभिचारज्ञानस्य पर्वतो वह्निमान् इत्यनुमित्यप्रतिबन्धकत्वाद्यस्य च व्याप्तिज्ञानं प्रत्येव प्रतिबन्धकत्वादिति वाच्यम्। अनुमितिपदेन अनुमितितत्करणान्यतरस्य विवक्षितत्वात्। अनुमितिकरणमात्रस्य विवक्षणे बाधादावव्याप्तिः बाधज्ञानस्यानुमितिकरण परामर्शं प्रत्यप्रतिबन्धकत्वादित्युभयोपादानम्।

अत्र नव्याः—अनुमितिप्रतिबन्धकेत्यत्र प्रतिबध्यता अनुमितिनिष्ठा किंवाऽनुमितित्वावच्छिन्नाऽनुमितित्वव्यापिका वा ग्राह्या। नाद्यः, पर्वतो वह्निमान् ह्रदश्च तथेत्याकारकानुमितिनिष्ठा या वह्न्यभाववद्ध्रदविषयकबुद्धित्वावच्छिन्नप्रतिबध्यता तन्निरूपितवह्न्यभाववद्ध्रदविषयकनिश्चयत्वावच्छिन्नप्रतिबन्धकताशालियथार्थज्ञानविषयतामादाय पर्वतो वह्निमान् इत्यादौ वह्न्यभाववद्ध्रदेऽतिप्रसङ्गापत्तेः। न द्वितीयः, बुद्धित्वनिश्चयत्वरूपधर्मयोरेव प्रतिबध्यप्रतिबन्धकभावावच्छेदकत्वेन अनुमितित्वनिष्ठतदवच्छेदकत्वस्यैवानङ्गीकारात्।

---

१ धूमेन ह्रदे वह्निसाधने द्रष्टव्यः।

२ अत्रानुमितित्वपदमनुमिततत्करणान्यतरत्वपरम्।

नापि तृतीयः, अनुमित्यप्रतिबन्धकव्यभिचारादौ व्याप्यप्रतिबन्धकबाधादौ चाव्याप्तेरपरिहारत्वात् । नचात्रानुमितिपदेन साध्यव्याप्यहेतुमान् पक्षः साध्यवानित्याकारकानुमितिर्विवक्षिता । तथाच । प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारताक–प्रकृतसाध्यतावच्छेदकावच्छिन्ननिरूपितव्याप्तिविशिष्टप्रकृतहेतुतावच्छेदकावच्छिन्नप्रकारताकानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वं हेत्वाभासत्वमिति लक्षणं निष्पन्नम् । बाधादावव्याप्तिवारणाय प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यताकत्वनिवेशः । साध्यतावच्छेदकावच्छिन्नप्रकारकत्वानिवेशे परामर्शाविरोधिनि बाधे सत्प्रतिपक्षे चाव्याप्तिरतस्तन्निवेशः । व्यभिचारादावव्याप्तिवारणाय द्वितीयदलप्रवेशः । आहार्यज्ञानस्यापि तथात्वात् बाधादिज्ञानाप्रतिबध्यत्वा-

---

१ एवं च अत्र प्रतिबध्यतायामनुमितित्वव्यापकत्वस्य विवक्षणात् 'पर्वतो वह्निमान्' इत्यादौ 'पर्वतो वह्निमान् वह्निव्याप्यधूमवांश्च ह्रदो वह्निमान्' इत्याकारिकां समूहालम्बनानुमितिमादाय वह्न्यभाववद्ध्रदे न दोषस्तातिप्रसङ्गः । अनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतेत्यस्य तादृशानुमितिसामान्यं प्रति प्रतिबन्धकेत्यर्थः । तादृशयावदनुमितिं प्रतीति यावत् । इयं च तादृशयावदनुमित्यन्तर्गतायां पर्वतो वह्निमान् वह्निव्याप्यधूमवांश्च' इत्यनुमितौ 'वह्न्यभाववान् ह्रदः' इतिनिश्चयस्य प्रतिबन्धकत्वाभावादिति भावः ।

२ बाधादाविति । अत्र आदिपदेन सत्प्रतिपक्षस्वरूपासिद्ध्याश्रयासिद्धीनां ग्रहणम् । तेषां पक्षतावच्छेदकविशिष्टपक्षघटितत्वात् । पक्षतावच्छेदकावच्छिन्नविशेष्यकत्वानिवेशे तादृशानुमितित्वं प्रकृतपक्षतावच्छेदकविशिष्टपक्षानवगाह्यनुमितौ तत्र च बाधादिज्ञाननिरूपितप्रतिबध्यताया अभावेन तस्यां प्रतिबध्यतायां तादृशानुमितित्वव्यापकत्वासंभवात् बाधादिज्ञानानां तादृशानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशालित्वाभावेन तादृशयथार्थज्ञानविषयत्वाभावादव्याप्तिरित्यर्थः ।

३ व्यभिचारादाविति । अत्र आदिपदेन विरोध–साधनाप्रसिद्धि–स्वरूपासिद्धीनां ग्रहणम् । साध्यविशिष्टपक्षावगाहिबुद्धिं प्रति व्यभिचारादिज्ञानानां प्रतिबन्धकत्वाभावात् ।

ष्यासंभव इत्यतस्तादृशानुमितित्वनिवेशः । धूमो वह्न्यभाववद्वृत्तिरितिभ्रमादप्यनुमितिप्रतिबन्धेनातिप्रसङ्गवारणाय यथार्थेति व्याख्याने न कोऽपि दोष इति वाच्यम् । तथापि प्रतिबन्धकज्ञानविषयव्यभिचारादिघटकसाध्यादेरपि प्रत्येकमतिप्रसङ्गः । विशिष्टविषयकज्ञानस्यैव प्रतिबन्धकत्वं तद्घटकस्य च न विशिष्टत्वमिति चेत्-पर्वतादेर्वह्न्यभावविशिष्टत्वाभावात् भ्रमविशिष्टविषयस्याप्रसिद्धत्वाद्यथार्थपदवैयर्थ्यस्य वज्रलेपत्वादित्याहुः ।

केचित्तु—अनाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयत्वं प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकत्वाभाववत्यवर्तमानं तत्त्वं हेत्वाभासत्वमित्याहुः ।

---

१ प्रतिबध्यतानां व्यापकत्वासंभवात् तादृशप्रकारकत्वव्यापकप्रतिबध्यताघटितत्वाच्च लक्षणस्येति भावः ।

२ **अनाहार्यं** बाधकालीनेच्छाजन्यं ज्ञानमाहार्यं तद्भिन्नमनाहार्यम् ।

३ **अप्रामाण्यज्ञानानास्कन्दितं** स्वविषयत्व–स्वसामानाधिकरण्योभयसंबन्धेनाप्रामाण्यप्रकारकज्ञानविशिष्टान्यत्वम् । अन्यविषयकज्ञानधर्मिकाप्रामाण्यज्ञानेन अन्यविषयकज्ञानस्याप्रामाण्यास्कन्दितत्वं मा भूदिति प्रथमसंबन्धनिवेशः । एकस्याप्रामाण्यज्ञाने अन्यसमवेतज्ञानस्य तत्त्वं माभूदिति द्वितीयसंबन्धनिवेशः ।

४ अत्र यद्रूपपदेन वह्न्यभाववद्ध्रदत्वादेर्दोषतावच्छेदकस्य ग्रहणम् । ह्रदो वह्निमान् इत्यादौ वह्न्यभाववद्ध्रदे लक्षणसमन्वयस्त्वित्थम्—अनाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषयत्वं तादृशनिश्चयवृत्तित्वविशिष्टवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयत्वं, प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताभाववदवर्तमानं प्रकृतानुमितिः 'ह्रदो वह्निमान् वह्निव्याप्यधूमवांश्च' इत्यनुमितिः तादृशानुमितित्वव्यापिका या प्रतिबध्यता वह्नित्वावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यताशालिबुद्धित्वावच्छिन्नप्रतिबध्यता तादृशप्रतिबध्यतानिरूपिता या प्रतिबन्धकता वह्न्यभावत्वावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकता तादृशप्रतिबन्धकताभाववदवर्तमानं भवति तादृशनिश्चयवृत्तित्वविशिष्टवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयताशालिज्ञानमात्रस्य ह्रदो वह्निमानिति बुद्धिं प्रति प्रतिबन्धकत्वात् अतः तद्रूपावच्छिन्नत्वं वह्न्यभाववद्ध्रदत्वावच्छिन्नत्वं वह्न्यभाववद्ध्रदे इति । एवमन्यत्राप्यूह्यम् ।

वस्तुतस्तु यद्विषयकनिश्चयोत्तरानुमितिसामान्ये विरोधिविषयताप्रयुक्तः प्रकृतपक्षतावच्छेदकविशिष्टपक्षे प्रकृतसाध्यतावच्छेदकविशिष्टसाध्यवैशिष्ट्यावगाहित्वस्य साध्यतावच्छेदकविशिष्टसाध्यनिरूपितव्याप्तिविशिष्टप्रकृतहेतुतावच्छेदकविशिष्टहेतुवैशिष्ट्यावगाहित्वस्य च द्वयोर्व्यतिरेकस्तत्त्वं हेत्वाभासत्वमिति दिक् ।

सव्यभिचारः हेतौ साध्याभाववद्वृत्तित्वरूपव्यभिचारसहितः । विरुद्धः हेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वरूपविरोधसहितः । सत्प्रतिपक्षः सन् प्रतिपक्षः साध्याभावसाधकव्याप्तिपक्षधर्मताविशिष्टः प्रतिहेतुर्यस्येति विग्रहे साध्याभावसाधकहेत्वन्तरविशिष्टः । असिद्धः हेत्वभाववत्पक्षादिरूपासिद्धिविशिष्टः । बाधितः साध्याभाववत्पक्षादिरूपबाधविशिष्ट इति समुदायाभिप्रायः ।

सव्यभिचारोऽनैकान्तिकः । स त्रिविधः साधारणासा-

---

१ वस्तुतस्त्विति । निर्वह्निः पर्वतो वह्निमानित्यादिस्थले प्रकृतपक्षकप्रकृतसाध्यकप्रकृतहेतुकानुमितेरप्रसिद्धत्वात्— प्रकृतपक्षतावच्छेदकावच्छिन्नपक्षे प्रकृतसाध्यतावच्छेदकविशिष्टसाध्यवैशिष्ट्यावगाहिज्ञानस्य 'निर्वह्निः पर्वतो वह्निमान्' इत्यस्य स्वविरोधिधर्मधर्मितावच्छेदकक–स्वप्रकारकनिश्चयत्वरूपनियताहार्यत्वात्, आहार्यपरोक्षज्ञानानङ्गीकारात्, अनुमितेः परोक्षज्ञानत्वात्–अनुमितित्वघटितलक्षणस्य तत्रत्यदोषे आश्रयासिद्ध्यादावव्याप्तेरिति भावः ।

२ वह्न्यभावविशिष्टह्रदत्वावच्छिन्नविषयकनिश्चयानन्तरं 'ह्रदो वह्निमान् वह्निव्याप्यधूमवांश्च' इत्याकारानुमितेः कदाचिदप्यनुत्पत्त्या घटाद्यनुमितय एव तादृशनिश्चयोत्तरानुमितिसामान्यान्तर्गताः तासु च ह्रदत्वादिविशिष्टे यद्वह्नित्वाद्यवच्छिन्नवैशिष्ट्यावगाहित्वं वह्नित्वाद्यवच्छिन्नवह्निव्याप्तिविशिष्टधूमत्वाद्यवच्छिन्नवैशिष्ट्यावगाहित्वं च तदुभयाभाववत्त्वमक्षतमेव । तत्र ( उक्तोभयाभावे ) तादृशनिश्चयनिष्ठविरोधिविषयताप्रयुक्तत्वं च स्वनिष्ठप्रतिबन्धकतावच्छेदकधर्मस्य स्वानन्तरोत्पन्नज्ञाननिष्ठप्रतिबध्यतावच्छेदकधर्माभावप्रयोजकत्वादिति बोध्यम् । 'निर्वह्निः पर्वतो वह्निमान्' इत्यादौ तादृशानुमितेरप्रसिद्धावपि वह्निमत्पर्वतादिरूपाश्रयासिद्ध्यादिविषयकनिश्चयानन्तरप्रसिद्धघटाद्यनुमितिषु अन्यत्रप्रसिद्धपक्षतावच्छेदकविशिष्टविषयकत्वावच्छिन्नसाध्यतावच्छेदकविशिष्टप्रकारिताघटितोभयाभाववत्त्वमक्षतमेवेति लक्षणसमन्वयः । अधिकमन्यतोऽवसेयम् ।

धारणानुपसंहारिभेदात् । तत्र साध्याभाववद्वृत्तिः साधारणोऽनैकान्तिकः । यथा पर्वतो वह्निमान् प्रमेयत्वादिति । प्रमेयत्वस्य वह्न्यभाववति ह्रदे विद्यमानत्वात् ॥

सव्यभिचारपर्यायशब्दमाह—सव्यभिचारोऽनैकान्तिक इति । सव्यभिचारत्वं साधारणाद्यन्यतमत्वम् । तं विभजते—स त्रिविध इति । साधारणं लक्षयति—तत्रेति । साध्यतदभाववति वर्तमानत्वं साधारणत्वं । यथा पर्वतो वह्निमान् प्रमेयत्वादिति प्रमेयत्वस्य वन्ह्यभाववति ह्रदे विद्यमानत्वात् ॥

सर्वसपक्षविपक्षव्यावृत्तः पक्षमात्रवृत्तिरसाधारणः । यथा शब्दो नित्यः शब्दत्वादिति । शब्दत्वं सर्वेभ्यो नित्येभ्योऽनित्येभ्यश्च व्यावृत्तं शब्दमात्रवृत्ति ॥

असाधारणं लक्षयति—सर्वसपक्षेति । सर्वे ये सपक्षाः विपक्षाश्च तेभ्यो व्यावर्तते निवर्तते इति व्यावृत्तः इत्यर्थः । उदाहरति—यथा शब्दो नित्य इति । नित्येभ्य आकाशादिभ्यः अनित्येभ्यो घटादिभ्य इत्यर्थः ।

अन्वयव्यतिरेकदृष्टान्तरहितोऽनुपसंहारी । यथा सर्वमनित्यं प्रमेयत्वादिति । अत्र सर्वस्यापि पक्षत्वाद्दृष्टान्तो नास्ति ॥

अनुपसंहारिणमाह—अन्वयेति । अत्यन्ताभावाप्रतियोगिसाध्यकत्वं लक्षणं, व्यतिरेकव्याप्तिग्रहप्रतिबन्धकश्चायम् । उदाहरति—यथेति ।

साध्याभावव्याप्तो हेतुर्विरुद्धः । यथा शब्दो नित्यः कृतकत्वादिति । कृतकत्वं हि नित्यत्वाभावेनानित्यत्वेन व्याप्तम् ॥

विरुद्धं लक्षयति—साध्याभावव्याप्त इति । साध्याभावव्या-

पक्षीभूताभावप्रतियोगित्वमित्यर्थः । साध्याभाववत्ताग्रहसामग्रीत्वेन प्रतिबन्धकः ।

**साध्याभावसाधकं हेत्वन्तरं यस्य स सत्प्रतिपक्षः । यथा शब्दो नित्यः श्रावणत्वाच्छब्दत्ववत् । शब्दोऽनित्यः कार्यत्वाद्धटवत् ॥**

सत्प्रतिपक्षलक्षणमाह—साध्याभावसाधकमिति । समानब-लबोधितसाध्यविपर्ययलिङ्गत्वं फलितार्थः । अत्र परस्पराभावव्याप्य-वत्ताज्ञानात्परस्परानुमितिप्रतिबन्ध फलम् ।

**असिद्धस्त्रिविधः । आश्रयासिद्धः स्वरूपासिद्धो व्याप्य-त्वासिद्धश्चेति ॥**

असिद्धं विभजते—असिद्ध इति । आश्रयासिद्ध्याद्यन्यतमत्वं लक्षणम् ।

**आश्रयासिद्धो यथा । गगनारविन्दं सुरभि, अरविन्द-त्वात् । सरोजारविन्दवत् । अत्र गगनारविन्दमाश्रयः स च नास्त्येव ॥**

आश्रयासिद्धमुदाहरति—आश्रयासिद्ध इति । पक्षे पक्ष-तावच्छेदकस्याभावस्तल्लक्षणम् ।

**स्वरूपासिद्धो यथा । शब्दो गुणश्चाक्षुषत्वात्, रूपवत् । अत्र चाक्षुषत्वं शब्दे नास्ति शब्दस्य श्रावणत्वात् ॥**

स्वरूपासिद्धमुदाहरति—स्वरूपासिद्ध इति । पक्षे हेत्वभाव-स्तल्लक्षणमित्यर्थः ।

---

१ **समानबलेति** । समानबलेन ( लिङ्गान्तरेण ) बोधित साध्यविपर्यय-साध्याभावो यस्य तादृशलिङ्गत्व हेतुत्व सत्प्रतिपक्षत्वमित्यक्षरार्थः । प्रकृतसाध्या-नुमापकबलशालित्वे सति प्रकृतसाध्याभावानुमापकबलशालिहेत्वन्तरकत्वमिति-यावत् । अत्रानुमापकत्वमनुमितिफलोपधायकत्व न सम्भवति परस्परप्रतिबन्धेनो-भयोरप्यबोधकत्वात् । अतोऽनुमितियोग्यत्वरूप तद्बोध्यम् ।

**सोपाधिको हेतुर्व्याप्यत्वासिद्धः। साध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधिः। साध्यसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं साध्यव्यापकत्वम्। साधनवन्निष्ठात्यन्ताभावप्रतियोगित्वं साधनाव्यापकत्वम्। पर्वतो धूमवान् वह्निमत्त्वादित्यत्रार्द्रेन्धनसंयोग उपाधिः। यत्र धूमस्तत्रार्द्रेन्धनसंयोग इति साध्यव्यापकता। यत्र वह्निस्तत्रार्द्रेन्धनसंयोगो नास्ति अयोगोलके आर्द्रेन्धनसंयोगाभावादिति साधनाव्यापकता। एवं साध्यव्यापकत्वे सति साधनाव्यापकत्वादार्द्रेन्धनसंयोग उपाधिः। सोपाधिकत्वाद्वह्निमत्त्वं व्याप्यत्वासिद्धम्॥**

व्याप्यत्वासिद्धमुदाहरति—**सोपाधिक इति**। व्याप्यत्वस्यासिद्धिर्यस्मादिति व्युत्पत्त्या उपाधिरेव व्याप्यत्वासिद्धः। पक्षे व्याप्यत्वेनाभिमतस्य साधनस्याभावे ज्ञाते पक्षे साध्यव्याप्यहेतुमत्ताज्ञानरूपस्य परामर्शस्य प्रतिबन्धः फलम्॥ तथाच व्यभिचारितासंबन्धेन उपाधिविशिष्ट इत्यर्थः। तं लक्षयति—**सोपाधिक इति**। व्याप्यत्वासिद्धस्तु द्विविधः—एको व्याप्तिग्राहकप्रमाणाभावप्रयुक्तः, अपर उपाधिसद्भावप्रयुक्तः। तत्राद्यो यथा—यत्सत् तत्क्षणिकं यथा घनः इत्यत्र न सत्त्वक्षणिकत्वयोर्व्याप्तिग्रहसाधकप्रमाणमस्ति। द्वितीयो यथा—क्रत्वन्तर्वर्तिनी हिंसाऽधर्मसाधिका हिंसात्वात् क्रतुबाह्यहिंसावत्। अत्राधर्मजनकत्वे हिंसात्वं न प्रयोजकं किंतु निषिद्धत्वमेव। अतः निषिद्धत्वं साध्यस्याधर्मजनकत्वस्य व्यापकं, यत्र यत्राधर्मजनकत्वं तत्रावश्यं निषिद्धत्वमपि। एवं साधनस्याव्यापकं निषिद्धत्वम्। नहि यत्र यत्र हिंसात्वं तत्र निषिद्धत्वमिति नियमः। यागीयपशुहिंसायां सत्यपि हिंसात्वे निषिद्धत्वाभावात्, अतो निषिद्धत्वमुपाधिस्तद्विशिष्टत्वाद्धिंसात्वहेतुर्व्याप्यत्वासिद्ध उपाधिसद्भावप्रयुक्त एवेति ध्येयमित्यन्यत्र विस्तरः।

**यस्य साध्याभावः प्रमाणान्तरेण निश्चितः स बाधितः । यथा वह्निरनुष्णो द्रव्यत्वादिति । अत्रानुष्णत्वं साध्यं तदभाव उष्णत्वं स्पार्शनप्रत्यक्षेण गृह्यते इति बाधितत्वम् ॥**

बाधितं लक्षयति—यस्येति । सत्प्रतिपक्षान्यत्वे सति पक्षविशेष्यकसाध्यप्रकारकानुमितिप्रतिबन्धकयथार्थज्ञानविषयत्वं पर्यवसितार्थः । ननु साध्याप्रसिद्ध्यादीनामप्यतिरिक्तहेत्वाभासानां सत्त्वात्कथं पञ्चैवेति चेन्न । व्याप्यत्वासिद्धौ तदन्तर्भावात् । साध्ये साध्यतावच्छेदकाभावविशिष्टः साध्याप्रसिद्ध इत्याद्यवगन्तव्यमिति ॥

व्याख्यातमनुमानम् ।

---

## उपमानपरिच्छेदः ।

**उपमितिकरणमुपमानम् । संज्ञासंज्ञिसंबन्धज्ञानमुपमितिः । तत्करणं सादृश्यज्ञानम् । तथाहि कश्चिद्गवयपदार्थमजानन्कुतश्चिदारण्यकपुरुषाद्गोसदृशो गवय इति श्रुत्वा वनं गतो वाक्यार्थं स्मरन्गोसदृशं पिण्डं पश्यति । तदनन्तरमसौ गवयशब्दवाच्य इत्युपमितिरुत्पद्यते ॥**

उपमानं निरूपयंस्तल्लक्षयति—उपमितिकरणमिति । उपमितिं लक्षयति—संज्ञासंज्ञीति । संज्ञा पदं, संज्ञी चार्थः । तयोः संबन्धः वाच्यत्वं तत्प्रकारकं गवयो गवयपदवाच्य इति ज्ञानमुपमितिरित्यर्थः । उपमितित्वं चोपमिनोमीत्यनुभवसिद्धो जातिविशेषः । तत्करणं तज्जनकमित्यर्थः । सादृश्यज्ञानमिति । सादृश्यप्रकारकं ज्ञानमित्यर्थः । उपमितेः करणत्वमेव व्यवस्थापयति—तथाहीति । वाक्यार्थमिति । अतिदेशवाक्यार्थं स्मरन्नित्यर्थः ।

---

१ स्मरन्निति । स्मरिष्यन्नित्यर्थः । 'वर्तमानसामीप्ये वर्तमानवद्वा' इति वर्तमानसमीपे भविष्यति लट् । एवं च वाक्यार्थस्मरणस्य सादृश्यदर्शनजन्यता-

तदनन्तरमिति । पिण्डदर्शनानन्तरमित्यर्थः । एतेन यत्र सादृश्य-वत्पिण्डदर्शनानन्तरमतिदेशवाक्यार्थबोधस्तत्रातिदेशवाक्यस्मरणस्या-नावश्यकतया अतिदेशवाक्यार्थस्मृतिरूपव्यापारविशिष्टसादृश्यवि-शिष्टपिण्डदर्शनं न करणं किंतु सादृश्यप्रकारकज्ञानमात्रं विशेषण-ज्ञानविधया तज्जन्यमतिदेशवाक्यार्थज्ञानं सादृश्यवत्पिण्डदर्शनं चोभयं व्यापार इति केषांचिन्मतं दूरतोऽपास्तम् । तथाच यत्र सादृश्यवि-शिष्टपिण्डदर्शनोत्तरमतिदेशवाक्यार्थस्मरणं नास्ति किंत्वतिदेशवाक्या-र्थशाब्दबोधस्तत्रोपमित्यनभ्युपगमात् । किंतु तदुत्तरं पुनः सादृश्य-विशिष्टपिण्डदर्शनं ततोऽतिदेशवाक्यार्थस्मरणं तदुत्तरमेवोपमिति-रिति दिनकर्यां स्पष्टम् । ननूपमानस्य प्रमाणान्तरत्वे किं मानमिति चेत्, प्रत्यक्षादिप्रमितिविलक्षणप्रमितिकरणमेवेति ब्रूमः । नच प्रत्यक्षादिप्रमितित उपमितेरेव विलक्षणप्रमितित्वासिद्धिरिति वा-च्यम् । चक्षुरादिव्यापाराभावेपि उपमित्युदयेन चाक्षुषत्वाभावात् उपमित्युत्तरं साक्षात्करोमीतिप्रत्यक्षत्वसाधकप्रतीत्यनुदयाच्च । व्या-

---

लाभेन तद्व्यापारत्वालाभः सदृशपिण्डदर्शनस्य च करणतालाभः । अत एव एतेने-त्याद्यग्रिमग्रन्थः संगच्छते । यथाश्रुते सादृश्यवत्पिण्डदर्शनानन्तरमित्या-दिना वाक्यार्थस्मरणस्य पिण्डदर्शनव्यापारताक्षेपः, किंतु तदुत्तरमित्यादिना तत्समाधानं चासङ्गतं स्यात् वाक्यार्थस्मरणोत्तरपिण्डदर्शनस्य सहकारिमात्रता-लाभेन करणत्वाङ्गीकारासंभवात् अनङ्गीकृते च पक्षे आक्षेपप्रदर्शनस्योन्मत्तप्रल-पितत्वापातादिति ध्येयम् ।

१ अनन्तरमित्यस्य ध्वंसक्षणे ( तदुत्पत्तितृतीयक्षणे ) इत्यर्थः । तेन द्विती-यक्षणे अतिदेशवाक्यार्थस्मरणस्य व्यापारस्य लाभात्सदृशपिण्डदर्शनस्य करणत्वो-पपत्तिः ।

२ एतेनेति । सादृश्यवत्पिण्डदर्शनस्य करणत्वोपगमेन अतिदेशवाक्यार्थ-स्मरणस्य तद्व्यापारत्वोपगमेन चेत्यर्थः ।

३ ननूक्तस्थले उपमित्यनभ्युपगमेऽनुभवापलापप्रसङ्गः, तत्रोपमितेरनुभवसि-द्धत्वादत आह–किंत्विति ।

४ तदुत्तरमिति । एवंचात्र योपमितिरनुभवसिद्धा सा क्षणद्वयविलम्बेना-स्मन्मतेऽप्युपपद्यत इति न कश्चिद्दोष इति भावः ।

स्यादिज्ञानाभावेऽपि तत्प्रतीत्युदयेनानुमितित्वासंभवाच्च। पदज्ञानाजन्यत्वाच्छाब्दत्वासंभवाच्च। अत एव न स्मृतिरननुभूतार्थस्य स्मरणायोग्यत्वादित्यन्यत्र विस्तरः॥

इति व्याख्यातमुपमानम्।

---

## शब्दपरिच्छेदः।

**आप्तवाक्यं शब्दः। आप्तस्तु यथार्थवक्ता। वाक्यं पदसमूहः। यथा गामानयेति।**

शब्दस्योपमानोपजीवकत्वात् [1]उपजीव्योपजीवकभावसंगतिमभिप्रेत्याह—**आप्तेति**। आप्तोच्चरितवाक्यमित्यर्थः। शब्द इति शब्दप्रमाणमित्यर्थः। उपोद्धातेनाप्तं लक्षयति—**आप्तस्त्विति**। **यथार्थेति**। प्रकृतवाक्यार्थविषयकयथार्थशाब्दबोधविषयकतात्पर्यवानित्यर्थः। तथाचैतादृशतात्पर्यजन्यवाक्यत्वं शब्दप्रमाणत्वं पर्यवसितमिति भावः।

**शक्तं पदम्। अस्मात्पदादयमर्थो बोद्धव्य इतीश्वरसंकेतः शक्तिः॥**

**शक्तमिति**। शक्तिमदित्यर्थः। तत्स्वरूपमाह—**अस्मादिति**। जन्यत्वं पञ्चम्यर्थः। **बोद्धव्य** इति बोधविषय इत्यर्थः। तथाच

---

[1] **उपजीव्येति**। उपमानफलस्य शक्तिपरिच्छित्ते शब्दफलस्य वाक्यार्थबोधस्य चोपजीव्योपजीवकभावो बोध्यः। वाक्यार्थबोधं प्रति शक्तिपरिच्छित्तेः (शक्तिज्ञानस्य) हेतुत्वात्। स च फलनिष्ठोऽपि स्वाश्रयकरणत्वसबन्धेन उपमान-शब्दनिष्ठ सत्त्वनिरूपणानन्तर्यनिर्वाहको भवति। इदं ज्ञायमानशब्दस्य प्रमाणतावादिना **प्राचां** मतेन। शब्दज्ञानस्य प्रमाणतामभ्युपगच्छता **नवीनानां** मते तु साक्षादेवानयोरुपजीव्योपजीवकभावः। उपमितेः शक्तिमच्छब्दविषयकत्वेन शब्दज्ञानत्वात् तस्य चोपमानजन्यत्वात्। **उपजीव्यं** कारणम्। **उपजीवकं** कार्यम्। एवं चेयं **निर्वाहकतया** कार्यतापरपर्याया संगतिर्बोध्या।

घटपदजन्यबोधविषयो घटो भवतु इतीश्वरेच्छा शक्तिरिति पर्यवसितम्। नन्वीश्वरेच्छाया ऐक्याद्धटपदजन्यबोधविषयत्वप्रकारिका या भगवदिच्छा तद्विषयत्वस्य पटेऽपि सत्त्वात् घटपदात् पटविषयकबोधोऽपि जायताम्। एवं गङ्गापदजन्यबोधविषयत्वप्रकारकेच्छायाः तीरे सत्त्वेन शक्तिवृत्त्यैव तीरविषयकबोधोपपत्तेर्लक्षणा नाङ्गीकर्तव्येति चेन्न। इच्छाया ऐक्येपि इच्छाविषयत्वस्य नानात्वेन तात्पर्यतस्तस्यैव निवेशसंभवात्। एवंच घटादिपदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतासंबन्धेनेश्वरेच्छावत्त्वस्यैव घटादिपदवाच्यत्वात्, पटादौ तादृशविशेष्यतासंबन्धेनेश्वरेच्छाया अभावान्नातिप्रसङ्ग इति भावः। नव्यास्तु डित्थादिपदेषु आधुनिकसंकेतविषयेषु ईश्वरीयसंकेताभावाच्छाब्दबोधानुपपत्तिरितीच्छामात्रं शक्तिरिति निगदन्ति। शक्तिग्राहकश्च वृद्धव्यवहारादिः तथाहि—उत्तमवृद्धेन मध्यमवृद्धं प्रति घटमानयेति वाक्ये उच्चारिते मध्यमवृद्धस्य घटानयनप्रवृत्तिं दृष्ट्वा व्युत्पित्सुः कश्चिद्बालः अन्वयव्यतिरेकाभ्यां मध्यमवृद्धनिष्ठा गवानयनप्रवृत्तिरुत्तमवृद्धप्रयुक्त—गामानयेति—वाक्यज्ञानजन्यज्ञानजन्येति निश्चिनोति। तदनन्तरमेव गां बधान अश्वमानयेति उत्तमवृद्धवाक्यं श्रुत्वा मध्यमवृद्धः गोर्बन्धन-

---

१ घटपदवाच्यत्वस्य पटेऽतिप्रसङ्गः स्यादिति भावः।

२ नन्वेवमपि ईश्वरेच्छायाः सन्मात्र( यावत्पदार्थ )विषयकत्वात्, तीरनिष्ठं यद्गङ्गापदजन्य( लक्षणाधीन )बोधविषयत्वं तद्विषयकत्वेन गङ्गापदजन्यबोधविषयत्वत्वावच्छिन्नप्रकारतानिरूपितविशेष्यतासंबन्धेनेश्वरेच्छावत्त्वरूपस्य गङ्गापदवाच्यत्वस्य तीरेऽप्यक्षततया तत्रातिप्रसङ्गस्तदवस्थ एवेति चेदत्रोच्यते—ईश्वरेच्छायाः सन्मात्रविषयत्वस्य तीरांशे गङ्गापदजन्यबोधविषयतायाः केवलविषयतात्वेन तत्र प्रकारत्वाङ्गीकारेणाप्युपपत्तौ तादृशविशिष्टविषयतात्वादिना तस्यास्तत्र तथात्वानङ्गीकारान्नोक्तातिप्रसङ्ग इति।

३ अन्वयव्यतिरेकाभ्यामिति। अत्र वाक्यज्ञानजन्यज्ञानसत्त्वे प्रवृत्तिसत्त्वं, वाक्यज्ञानजन्यज्ञानाभावे प्रवृत्त्यभाव इति अन्वयव्यतिरेकौ बोध्यौ।

मश्वानयनं च करोतीति तटस्थो बालः आवापोद्वापाभ्यां[1] गोपदं गोत्वावच्छिन्ने शक्तमश्वपदं चाश्वत्वावच्छिन्ने शक्तमिति वृद्धव्यवहारप्रयुक्तां शक्तिं गृह्णाति । एवं भूसत्तायां, वर्त्तमाने लडिति व्याकरणसूत्रादपि वर्त्तमानकालिकी सत्तेति बोधो भवति । तदुक्तं—

शक्तिग्रहं व्याकरणोपमान-
कोशाप्तवाक्याद्व्यवहारतश्च ।
वाक्यस्य शेषाद्विवृतेर्वदन्ति
सान्निध्यतः सिद्धपदस्य वृद्धाः ॥ इति ।

तथाहि—व्याकरणाच्छक्तिग्रहस्तूक्त एव । उपमानाच्च यथा गवयशब्दवाच्यमजानन् कश्चित्केनाप्युक्तं 'गोसदृशो गवय' इति वाक्यं श्रुत्वा वनं गतः सन् गोसदृशं पिण्डं पश्यति तदनन्तरं च तद्वाक्यं स्मृत्वाऽयं गवयशब्दवाच्य इति शक्तिं गृह्णाति । तदुपमानादेवेति भावः । कोशाच्च गुणे शुक्लादयः पुंसीत्यनुशासनात् पीतः शङ्ख इत्यादौ पीतगुणविशिष्ट इति निश्चिनोति । वृद्धवाक्यान्निरूपित एव शक्तिग्रहः । एवमाप्तवाक्यादपि । वाक्यशेषाद्यथा—यवमयश्चरुर्भवतीत्यत्र यवशब्दस्य दीर्घशूकविशेषे ।

वसन्ते सर्वसस्यानां जायते पत्रशातनम् ।
मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः ॥

इत्यादितः । विवृतिर्विवरणं, स्वप्रतिपादितार्थप्रतिपादकपदान्तरकथनं तस्माद्यथा—पाकशासनः इन्द्र इत्यादौ । सिद्धपदस्य सान्निध्यात्—'इह विकसितसरोरुहे भ्रमरः' इत्यादौ भ्रमरादौ शक्तिग्रहो भवतीति बोध्यम् । गवादिपदानां व्यक्ताविव शक्तिर्नतु जातावपि गौरवादिति नव्याः[2] ।

---

१ **आवापः** तस्मिन्नधिकस्य प्रक्षेपः । **उद्वापः** ततः सतो निष्कासनम् । यथा प्रकृते गामानयेतिवाक्ये बधानेत्यस्यावापः, आनयेत्यस्य उद्वापः ।

२ **नव्या इति** । परं त्वेवं क्रमेण शक्यतावच्छेदकेऽपि शक्तिर्न स्यात्,

घटपदजन्यबोधविषयो घटो भवतु इतीश्वरेच्छा शक्तिरिति पर्यवसितम्। नन्वीश्वरेच्छाया ऐक्याद्घटपदजन्यबोधविषयत्वप्रकारिका या भगवदिच्छा तद्विषयत्वस्य पटेऽपि सत्त्वात् घटपदात् पटविषयकबोधोऽपि जायताम् । एवं गङ्गापदजन्यबोधविषयत्वप्रकारकेच्छायाः तीरे सत्त्वेन शक्तिवृत्त्यैव तीरविषयकबोधोपपत्तेर्लक्षणा नाङ्गीकर्तव्येति चेन्न । इच्छाया ऐक्येपि इच्छाविषयत्वस्य नानात्वेन तात्पर्यतस्तस्यैव निवेशसंभवात् । एवंच घटादिपदजन्यबोधविषयतावच्छिन्नप्रकारतानिरूपितविशेष्यतासंबन्धेनेश्वरेच्छावत्त्वस्यैव घटादिपदवाच्यत्वात्, पटादौ तादृशविशेष्यतासंबन्धेनेश्वरेच्छाया अभावान्नातिप्रसङ्ग इति भावः । **नव्यास्तु** डित्थादिपदेषु आधुनिकसंकेतविषयेषु ईश्वरीयसंकेताभावाच्छाब्दबोधानुपपत्तिरितीच्छामात्रं शक्तिरिति निगदन्ति । शक्तिग्राहकश्च वृद्धव्यवहारादिः तथाहि—उत्तमवृद्धेन मध्यमवृद्धं प्रति घटमानयेति वाक्ये उच्चारिते मध्यमवृद्धस्य घटानयनप्रवृत्तिं दृष्ट्वा व्युत्पित्सुः कश्चिद्बालः अन्वयव्यतिरेकाभ्यां मध्यमवृद्धनिष्ठा गवानयनप्रवृत्तिरुत्तमवृद्धप्रयुक्त—गामानयेति—वाक्यज्ञानजन्यज्ञानजन्येति निश्चिनोति । तदनन्तरमेव गां बधान अश्वमानयेति उत्तमवृद्धवाक्यं श्रुत्वा मध्यमवृद्धः गोर्बन्धन-

---

१ पटपदवाच्यत्वस्य पटेऽतिप्रसङ्गः स्यादिति भावः ।

२ नन्वेवमपि ईश्वरेच्छायाः सन्मात्र( यावत्पदार्थ )विषयकत्वात् तीरनिष्ठं गङ्गापदजन्य( लक्षणाधीन )बोधविषयत्वं तद्विषयकत्वेन गङ्गापदजन्यबोधविषयत्वावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेनेश्वरेच्छावत्त्वरूपस्य गङ्गापदवाच्यत्वस्य तीरेऽप्यक्षततया तत्रातिप्रसङ्गस्तदवस्थ एवेति चेदत्रोच्यते—ईश्वरेच्छाया- सन्मात्रविषयत्वस्य तीरांशे गङ्गापदजन्यबोधविषयतायाः केवलविषयतात्वेन तत्र प्रकारत्वाङ्गीकारेणाप्युपपत्तौ तादृशविशिष्टविषयतात्वादिना तस्यास्तत्र तथात्वानङ्गीकारान्नोक्तातिप्रसङ्ग इति ।

३ अन्वयव्यतिरेकाभ्यामिति । अत्र वाक्यज्ञानजन्यज्ञानसत्त्वे प्रवृत्तिसत्त्वं, वाक्यज्ञानजन्यज्ञानाभावे प्रवृत्त्यभाव इति अन्वयव्यतिरेकौ बोध्यौ ।

मश्वानयनं च करोतीति तटस्थो बालः [1]आवापोद्वापाभ्यां गोपदं गोत्वावच्छिन्ने शक्तमश्वपदं चाश्वत्वावच्छिन्ने शक्तमिति वृद्धव्यवहारप्रयुक्तां शक्तिं गृह्णाति । एवं भूसत्तायां, वर्त्तमाने लडिति व्याकरणसूत्रादपि वर्त्तमानकालिकी सत्तेति बोधो भवति । तदुक्तं—

शक्तिग्रहं व्याकरणोपमान-
कोशाप्तवाक्याद्व्यवहारतश्च ।
वाक्यस्य शेषाद्विवृतेर्वदन्ति
सान्निध्यतः सिद्धपदस्य वृद्धाः । इति ।

तथाहि—व्याकरणाच्छक्तिग्रहस्तूक्त एव । उपमानाच्च यथा गवयशब्दवाच्यमजानन् कश्चित्केनाप्युक्तं 'गोसदृशो गवय' इति वाक्यं श्रुत्वा वनं गत' सन् गोसदृशं पिण्डं पश्यति तदनन्तरं च तद्वाक्यं स्मृत्वाऽयं गवयशब्दवाच्य इति शक्तिं गृह्णाति । तत्तूपमानादेवेति भावः । कोशाच्च गुणे शुक्लादयः पुंसीत्यनुशासनात् पीतः शङ्ख इत्यादौ पीतगुणविशिष्ट इति निश्चिनोति । वृद्धवाक्यान्निरूपित एव शक्तिग्रह. । एवमाप्तवाक्यादपि । वाक्यशेषाद्यथा—यवमयश्चरुर्भवतीत्यत्र यवशब्दस्य दीर्घशूकविशेषे ।

वसन्ते सर्वसस्यानां जायते पत्रशातनम् ।
मोदमानाश्च तिष्ठन्ति यवा' कणिशशालिन. ॥

इत्यादितः । विवृतिर्विवरणं, स्वप्रतिपादितार्थप्रतिपादकपदान्तरकथनं तस्माद्यथा—पाकशासन. इन्द्र इत्यादौ । सिद्धपदस्य सान्निध्यात्—'इह विकसितसरोरुहे भ्रमर.' इत्यादौ भ्रमरादौ शक्तिग्रहो भवतीति बोध्यम् । गवादिपदानां व्यक्तावेव शक्तिर्नतु जातावपि गौरवादिति [2]नव्याः ।

---

१ आवापः तस्मिन्नधिकस्य प्रक्षेप । उद्वापः तत सतो निष्कासनम् । यथा प्रकृते गामानयेतिवाक्ये बधानेत्यस्यावाप , आनयेत्यस्य उद्वाप ।

२ नव्या इति । पर त्वेवं क्रमेण शक्यतावच्छेदकेऽपि शक्तिर्न स्यात्,

क्रमेण तेषां लक्षणान्याह—पदस्येति । पदनिष्ठमित्यर्थः । अन्वयाननुभावकत्वमन्वयबोधानुपधायकत्वमित्यर्थः । तथाच गामानयेत्यत्र गोपदस्य अम्पदाभावप्रयुक्तं शाब्दबोधानुपधायकत्वं गोपदे अम्पदाकाङ्क्षेति शाब्दबोधः । अत्र घटकर्मतावोधं प्रति घटपदोत्तरद्वितीयारूपाकाङ्क्षाज्ञानं कारणम् । अन्यथा घटः कर्मत्वमानयनं कृतिरित्यादितोऽपि शाब्दबोधः स्यात् । एवं तात्पर्यज्ञानमपि शाब्दबोधे कारणम् । अन्यथा हरिं भजते इत्यादौ क्वचिदिन्द्रस्य क्वचिद्विष्णोश्च बोधो न स्यात् । नच प्रकरणादीनां तात्पर्यग्राहकत्वेनावश्यमपेक्षणीयतया तेषामेव शाब्दबोधकरणत्वमस्त्विति वाच्यम् । प्रकरणादीनामननुगतत्वेन परस्परजन्यशाब्दबोधे चालनीन्यायेन सर्वेषां व्यभिचरितत्वेन शाब्दबोधकरणत्वाभावात् । ननु संयोगाद्यन्यतमत्वेन तेषां परिगणितानामनुगम इति चेन्न । अन्यतमत्वस्य तद्भिन्नभिन्नत्वरूपस्य कुक्षौ सर्वस्य जगतः प्रविष्टतयाऽतिगुरुतरत्वेन कारणतावच्छेदकत्वानङ्गीकारात् । ननु तात्पर्यज्ञावजनकत्वेनानुगमय्यैव कारणतास्त्विति चेन्न । जनकतावच्छेदकविधयावश्यकस्य तात्पर्यज्ञानस्य लाघवेन कारणत्वात् । अतश्च सिद्धं तात्पर्यज्ञानस्य शाब्दबोधत्वावच्छिन्नं प्रति कारणत्वमिति दिक् ।

**अर्थाबाधो योग्यता ॥**

योग्यतां लक्षयति—अर्थाबाध इति । अर्थस्यान्वयस्याबाधः अभावाभावः एकपदार्थेऽपरपदार्थसंबन्ध इति यावत् । अत्र शाब्दबोधं प्रति योग्यताज्ञानस्य संशयनिश्चयसाधारण्येनैव कारणत्वं

१ संयोगादयश्च काव्यप्रकाशकृता दर्शिताः—

संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥ १ ॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥ २ ॥

अनवच्छेदे अनेकत्वे इत्यर्थः ।

योध्यं, तेन शाब्दबोधात्पूर्वं योग्यताज्ञानस्य निश्चयाभावेऽपि न क्षतिः । नव्यास्तु शाब्दबोधं प्रति योग्यताज्ञानं न कारणं, वह्निना सिञ्चेदित्यत्र शाब्दबोधाभावस्तु सेके वह्निकारणत्वाभावरूपायोग्यतानिश्चयरूपप्रतिबन्धकप्रयुक्तः । ननु अयोग्यतानिश्चयस्य प्रतिबन्धकत्वे तदभाववत्त्वेन हेतुत्वस्यावश्यकतया तदपेक्षया लाघवेन योग्यताज्ञानमेव कारणमस्त्विति चेन्न । तदभाववत्तारूपायोग्यतानिश्चयस्य लौकिकसन्निकर्षाघजन्यदोषविशेषाजन्यतज्ज्ञानमात्रे प्रतिबन्धकत्वेन शाब्दबोधं प्रत्यपि प्रतिबन्धकत्वस्याक्षतत्वात् । ननु यत्र योग्यताज्ञानमपि नास्ति नाप्ययोग्यताज्ञानं तत्र शाब्दबोधापत्तिरिति चेन्न । इष्टापत्तेः ।

**पदानामविलम्बेनोच्चारणं संनिधिः ॥**

सन्निधिं लक्षयति—पदानामिति । यस्य पदस्यार्थेन सह यस्य पदस्यार्थस्यान्वयोऽपेक्षितस्तयोः पदयोरव्यवधानेनोच्चारणमित्यर्थः । एतेन गिरिर्भुक्तमग्निमान्देवदत्तेनेत्यादौ गिरिपदभुक्तपदयोः सान्निध्येन शाब्दबोधः कथं न भवतीत्याशङ्का परास्ता ।

**तथाच आकाङ्क्षादिरहितं वाक्यमप्रमाणम् । यथा गौरश्वः पुरुषो हस्तीति न प्रमाणमाकाङ्क्षाविरहात् । वह्निना सिञ्चेदिति न प्रमाणं योग्यताविरहात् । प्रहरे प्रहरेऽसहोच्चारितानि गामानयेत्यादिपदानि न प्रमाणं सांनिध्याभावात् ॥**

आकाङ्क्षादिरहितस्य वाक्यस्य प्रमाणत्वं निषेधति—तथाचेति । अत्र सान्निध्यसत्त्वेपि परस्परापेक्षाभावादाकाङ्क्षाविरहेण न शाब्दबोध इति भावः । अनाकाङ्क्षाद्युदाहरणं दर्शयति—यथा गौरश्वः इति ।

**वाक्यं द्विविधम् । वैदिकं लौकिकं च । वैदिकमीश्वरो-**

**क्तत्वात्सर्वमेव प्रमाणम् । लौकिकं त्वाप्तोक्तं प्रमाणम् । अन्यदप्रमाणम् ॥**

प्रसङ्गाद्वाक्यं विभजते—वाक्यमिति । विभज्य दर्शयति—वैदिकमिति । वेदघटकं वैदिकं, तद्भिन्नं लौकिकमित्यर्थः । ईश्वरोक्तत्वादिति । वेदः पौरुषेयः[1] महावाक्यत्वाद्भारतादिवदित्यनुमानेन तत्सिद्धिरिति । इतिहासपुराणादीनां प्रामाण्यं[2] तु वेदमूलकतयैव बोध्यम् । यस्य मूलभूता श्रुतिर्नोपलभ्यते तस्यापि मूलभूतश्रुतिघटिता शाखोच्छिन्नेति कल्प्यते इत्यन्यत्र विस्तरः ॥

**वाक्यार्थज्ञानं शाब्दज्ञानम् । तत्करणं शब्दः ॥ ]**

शब्दलक्षणमाह—वाक्यार्थेति । तत्करणमिति[3] । एकपदार्थानुयोगिकाऽपरपदार्थप्रतियोगिकसंसर्गविषयकं ज्ञानमित्यर्थः । तथाच नीलो घट इत्यादौ घटपदानुयोगिकनीलपदार्थप्रतियोगिको यः संसर्गः अभेदरूपस्तद्विषयकज्ञानमेव वाक्यार्थज्ञानमिति बोध्यम् ॥ शाब्दलक्षणं तु शक्तिलक्षणान्यतरसंबन्धेन[4] पदजन्यपदार्थस्मृतित्वावच्छिन्नकारणतानिरूपितकार्यत्वम् ।

अत्रायं शाब्दबोधप्रकारः—गामानयेत्यत्र द्वितीयार्थः कर्मत्वं 'कर्मणि द्वितीया' इत्यनुशासनात् । नीधात्वर्थ आनयनम् । आख्यातार्थः कृतिः । तथा कर्मत्वे वृत्तित्वसंबन्धेन गोपदार्थस्यान्वयः । तस्य प्रतियोगित्वसंबन्धेनानयनेऽन्वयः[5] । तस्यानुकूलत्वसंबन्धेन कृतावन्वय-

---

१ पौरुषेय इति । सजातीयोच्चारणानपेक्षोच्चारितजातीयत्वम्, प्रमाणान्तरेणार्थमुपलभ्य विरचितत्वं वा पौरुषेयत्वम् ।

२ अदृष्टार्थविषये इति शेषः । दृष्टार्थे तु व्यासाद्याप्तोक्तत्वादेवेति बोध्यम् ।

३ शब्देति । प्रमाणशब्देत्यादिः ।

४ संबन्धेनेति । अत्र तृतीयार्थः प्रकारकत्वं तस्य पदपदार्थे पदधर्मिकज्ञानेऽन्वयः । इत्थंच—पदधर्मिक–शक्तिलक्षणान्यतरसंबन्धप्रकारकज्ञानजन्यपदार्थस्मृतित्वेत्यादयर्थः ।

५ प्रतियोगित्वं निरूपकत्वम् ।

तस्याः समवायसंबन्धावच्छिन्नाश्रयतासंबन्धेन त्वंपदार्थेऽन्वयः । तथाच गोवृत्तिकर्मताप्रतियोगिकानयनानुकूलकृत्याश्रयस्त्वमिति शाब्दबोधः। एवं चन्द्रवन्मुखमित्यत्र चन्द्रस्य निरूपितत्वसंबन्धेन सादृश्येऽन्वयः । तस्याश्रयतासंबन्धेन मुखेऽन्वयः । तथाच निरूपितत्वसंबन्धावच्छिन्नचन्द्रत्वावच्छिन्नप्रकारतानिरूपितसादृश्यत्वावच्छिन्नविशेष्यतासमानाधिकरणाश्रयतासंबन्धावच्छिन्नसादृश्यनिष्ठप्रकारतानिरूपितमुखत्वावच्छिन्नविशेष्यताशाली शाब्दबोधः प्रथमान्तार्थमुख्यविशेष्यक एव ।

अत्र वैयाकरणाः—धात्वर्थमुख्यविशेष्यक एव शाब्दबोधः सर्वत्राङ्गीकार्यः । तथाच ग्रामं गच्छति देवदत्त इत्यत्र देवदत्तकर्तृकं ग्रामकर्मकं वर्तमानकालीनं गमनमिति बोधः। एवमन्यत्रापि। एवं च शृणु गर्जति मेघ इत्यादौ गर्जनाश्रयीभूतमेघकर्मकश्रवणाश्रयीभूतस्त्वमिति नैयायिकानां शाब्दबोधः स न संभवति मेघकर्मकश्रवणासंभवात् । एवं शृणु नटो गायतीत्यत्र गायनाश्रयीभूतनटकर्मकश्रवणासंभवादित्यूचुस्तन्न रमणीयम्। प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधस्वीकारेपि 'सविशेषणे हि विधिनिषेधौ वर्तमानौ सति विशेष्ये बाधे विशेषणमुपसंक्रामतः' इति विशेष्ये मेघे श्रवणासंभवेऽपि विशेषणेषु गर्जनादिषु श्रवणादीनामन्वयसंभवात् । दृष्टं चैतद्विशेषणान्वयित्वं स्रग्वी ध्वस्तः शिखी ध्वस्तः इत्यादिप्रयोगे । तत्र ध्वस्त इति क्तप्रत्ययार्थध्वंसप्रतियोगिनः शिखिनः स्रग्विणश्च विनाशेन सममन्वयासंभवेन शिखास्रग्योरेव तेन सहान्वयविवक्षणात् । ननु 'पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन' इति न्यायलभ्य—यत्किंचित्पदार्थनिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति पदजन्यपदार्थोपस्थितिर्विशेष्यतासंबन्धेन प्रयोजिका—इति नियमस्य सर्वैः स्वीकार्यतया[1] ध्वंसप्रति-

१ स्वीकार्यतयेति । घटत्वे नित्यपदार्थस्याभेदान्वयतात्पर्येण घटो नित्य इति प्रयोगस्य साधुत्वापत्तिवारणायेति भावः ।

वान्नास्तीति तर्कितप्रतियोगिसत्त्वविरोध्यनुपलब्धिप्रमाणेन घटाभावो निश्चीयत इतिचेन्न । तत्सहकारेण प्रत्यक्षस्यैवाभावग्राहकत्वाङ्गीकारात् । एवं 'शते पञ्चाशत्' इति संभवोपि अनुमानान्तर्भूतः । इह वटे यक्षस्तिष्ठतीत्यैतिह्यमप्यज्ञातमूलवक्तृके शब्दे । चेष्टाया अनुमानेऽन्तर्भाव इति प्रत्यक्षानुमानोपमानशब्दाश्चत्वार्येव प्रमाणानीति सिद्धम् ।

ननु चक्षुषा स्वसंबद्धार्थस्यैव प्रतिपत्तिर्भवतीत्यत्र किं प्रमाण मितिचेन्न । चक्षुःश्रोत्रे वस्तु प्राप्य प्रकाशकारिणी इन्द्रियत्वात् त्वगादिवदित्यनुमानस्यैव वस्तु प्राप्य प्रकाशकारित्वद्वारा तत्र प्रमाणत्वात् । ननु त्वगादीनामेव वस्तु प्राप्य प्रकाशकारित्वे किं प्रमाणमितिचेन्न । त्वगादीन्द्रियाणि वस्तुप्रकाशकानि प्रत्यक्षज्ञानकरणत्वादालोकवदित्यनुमानस्य प्रमाणत्वात् । किं च तेषां वस्तु प्राप्य प्रकाशकारित्वं तु प्रत्यक्षसिद्धमेवेति न तदंशे विवादः । नन्वस्तु वस्तु प्राप्य प्रकाशकारित्वमिन्द्रियस्य परं संबन्धाभावात् कथं चक्षुषा संबन्धाभावप्रत्यक्षमितिचेन्न । विशेष्यविशेषणभावरूपसंबन्धस्य सत्त्वात् । नच यो हि संबन्धो भवति स संबन्धिभ्यां भिन्न उभयाश्रित एकश्च । यथा भेरीदण्डसंयोगः । नायं तथा विशेष्यविशेषणभावस्य तत्स्वरूपत्वकल्पनेनैव सामञ्जस्यादिति वाच्यम् । असंबद्धाभावग्रहेऽप्यतिप्रसङ्गदोषस्यैतादृशसंबन्धेनैव वारणीयत्वात् । उभयमतेऽपि तुल्यदोषतत्परिहारत्वात् । तथोक्तं—

> 'यत्रोभयोः समो दोषः परिहारोऽपि वा समः ।
> नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे ॥' इति ।

**अयथार्थानुभवस्त्रिविधः संशयविपर्ययतर्कभेदात् ।** ए-

---

१ तर्कितेति । तर्किता आपादिता प्रतियोगिनो घटादेः सत्त्वस्य सत्त्वप्रसक्तेर्विरोधिनी या उपलब्धिः तत्प्रतियोगिकोऽभावोऽनुपलब्धिस्तद्रूपप्रमाणेनेत्यर्थः ।

**एकस्मिन्धर्मिणि विरुद्धनानाधर्मवैशिष्ट्यावगाहि ज्ञानं संशयः । यथा स्थाणुर्वा पुरुषो वेति ॥**

प्राग्लक्षितस्यायथार्थानुभवस्य विभागमाह—**अयथार्थेति** । विभज्य दर्शयति—**संशयेत्यादिना** । संशयलक्षणमाह—**एकस्मिन्निति** । एकधर्मिनिष्ठविशेष्यतानिरूपितविरुद्धनानाधर्मनिष्ठप्रकारताशालिज्ञानत्वमित्यर्थः । उदाहरति—**यथेति** । घटपटविषयकसमूहालम्बनरूपे ज्ञाने विरुद्धघटत्वपटत्वादिनानाधर्मवैशिष्ट्यावगाहित्वादतिप्रसङ्गवारणाय **एकस्मिन्निति** । एकस्मिन्नेव घटादौ घटत्वप्रमेयत्वादिनानाधर्मवैशिष्ट्यावगाहनादतिव्याप्तिरतः **विरुद्धेति** । विपर्ययेऽतिव्याप्तिवारणाय **नानेति** । स च त्रिविधः—एकः समानधर्मदर्शनजः, द्वितीयो विप्रतिपत्तिजः[1], तृतीयोऽसाधारणधर्मदर्शनजः । तत्राद्यो यथा—स्थाणुर्वा पुरुषो वेति । तत्रैकस्मिन्नेव स्थाणुत्वनिश्चायकं वक्रकोटरत्वादिकं, पुरुषत्वनिश्चायकं च शिरःकम्पादिकं विशेषमपश्यतः, समानधर्ममूर्द्धत्वं पश्यतः, पुंसो भवत्येव संशय इति । द्वितीयो यथा—शब्दो नित्य उतानित्य इति । अत्र कश्चिद्वदति शब्दो नित्य इति । अनित्य इत्यपरः । ततो विप्रतिपत्त्या शब्दो नित्योऽनित्यो वेति संशयः । तृतीयो यथा—नित्यानित्यव्यावृत्तं पृथिवीमात्रवृत्तिगन्धवत्त्वज्ञानं भुवि नित्यानित्यत्वस्य संशयं करोति ॥

**मिथ्याज्ञानं विपर्ययः । यथा शुक्तौ 'रजतम्' इति ॥**

विपर्ययं निरूपयति—**मिथ्याज्ञानमिति**[2] । तदभाववति तत्प्र-

---

१ **विप्रतिपत्तिः** । विरुद्धार्थप्रतिपादकं वाक्यद्वयम् ।

२ **मिथ्येति** । मिथ्याज्ञानमेवाऽन्यथाख्यातिपदेनोच्यते । अन्यथेत्यत्र 'थाल्' प्रत्ययस्य प्रकारवाचित्वात् अन्यथेत्यस्य अन्यप्रकारेण विशेष्यावृत्तिधर्मेण या ख्यातिः ज्ञानं (विशेष्यस्य) इत्यर्थकत्वात् । प्रामाकरास्तु ईदृशस्थले ग्रहणस्मरणात्मकं ज्ञानद्वयमङ्गीकुर्वन्ति । ते अख्यातिवादिन इत्युच्यन्ते । अद्वैतिनस्तु असत्ख्यातिमसतः शुक्तिरजतत्वयोः समवायस्य ख्यातिं वदन्ति ।

कारकनिश्चयानुभवत्वमित्यर्थः । तर्केऽतिव्याप्तिवारणाय तर्कान्यत्वमपि देयम् ।

**व्याप्यारोपेण व्यापकारोपस्तर्कः । यथा यदि वह्निर्न स्यात्तर्हि धूमोऽपि न स्यादिति ॥**

तर्कं लक्षयति—व्याप्यारोपेणेति । अयं च प्रवर्तमानस्य धूमलिङ्गस्य विषयमभिमत्त्वमनुजानाति[1], अनभिमत्त्वं च प्रतिषेधति[2] । अतोऽनुमानस्य भवत्यनुग्राहक इति विपर्ययात् पृथङ्निर्देशः ।

**स्मृतिरपि द्विविधा । यथार्था अयथार्था च । प्रमाजन्या यथार्था । अप्रमाजन्या अयथार्था ॥**

स्मृतिं विभजते—स्मृतिरपीति । स्वजन्यसंस्कारसंबन्धेन प्रमायाः स्मृतिकारणत्वमिति भावः ।

**सर्वेषामनुकूलवेदनीयं सुखम् ॥**

सुखं लक्षयति—सर्वेषामिति । सुखत्वं चाहं सुखीत्यनुभवगम्यो जातिविशेषः ।

**प्रतिकूलवेदनीयं दुःखम् ॥**

दुःखं निरूपयति—प्रतिकूलेति । दुःखत्वं जातिः ।

**इच्छा कामः ।**

इच्छां निरूपयति—इच्छेति । सा द्विविधा, फलविषयिणी उपायविषयिणी च । फलमिच्छायाः सुखं दुःखाभावश्च । तत्र फलेच्छां प्रति फलज्ञानं कारणम् । उपायेच्छां प्रतीष्टसाधनताज्ञानं कारणम् ।

**क्रोधो द्वेषः ।**

द्वेषं लक्षयति—क्रोध इति । तं प्रति दुःखज्ञानं, दुःखोपायद्वेषं

---

१ अनुजानातीति । कारणोपपत्त्येति शेषः ।

२ प्रतिषेधतीति । कारणस्यानुपपद्यमानत्वदर्शनादिति शेषः ।

प्रति च बलवद्द्विष्टसाधनताज्ञानं कारणम् । बलवदिष्टसाधनताज्ञानं प्रतिबन्धकम् । निवृत्तेः साक्षादनुकूलत्वं लक्षणम् ।

**कृतिः प्रयत्नः ॥**

प्रयत्नं निरूपयति—**कृतिरिति** । स त्रिविधः—प्रवृत्ति–निवृत्ति–जीवनयोनिभेदात् ।

**विहितकर्मजन्यो धर्मः । निषिद्धकर्मजन्यस्त्वधर्मः ॥ बुद्ध्यादयोऽष्टावात्ममात्रविशेषगुणाः । बुद्धीच्छाप्रयत्ना नित्या अनित्याश्च । नित्या ईश्वरस्य । अनित्या जीवस्य ॥**

धर्मं लक्षयति—**विहितेति** । इष्टसाधनतया वेदप्रतिपाद्यत्वं लक्षणमित्यर्थः । साक्षात्सुखसाधनत्वं पर्यवसितं लक्षणम् । तेन ज्योतिष्टोमादौ नातिप्रसङ्गः[1] । अधर्मं लक्षयति—**निषिद्धेति** । अनिष्टसाधनत्वेन वेदबोधितमित्यर्थः । तत्र धर्मः भोग–कीर्तनादिनाऽधर्मश्च भोगप्रायश्चित्तादिना नश्यति । एतावेवादृष्टमिति कथ्येते । एतावेव च सुखदुःखस्यासाधारणकारणावनुमानलब्धौ । तथाहि—देवदत्तस्य शरीरादिकं देवदत्तविशेषगुणजन्यं कार्यत्वे सति देवदत्तस्य भोगहेतुत्वाद्देवदत्तप्रयत्नजन्यवस्तुवदिति । शरीरादिजनकात्मविशेषगुणश्च धर्माधर्मावेव । प्रयत्नादीनां शरीराद्यजनकत्वादिति दिक् ।

**संस्कारस्त्रिविधः । वेगो भावना स्थितिस्थापकश्चेति । वेगः पृथिव्यादिचतुष्टयमनोवृत्तिः ।**

संस्कारं विभजते—**संस्कार इति** । संस्कारव्यवहारहेतुत्वं लक्षणम् । क्रियाजन्यत्वे सति क्रियाजनकत्वं वेगस्य लक्षणम् । वेगस्याश्रयमाह—**पृथिव्यादीति** ।

**अनुभवजन्या स्मृतिहेतुर्भावना आत्ममात्रवृत्तिः ।**

भावनां निरूपयति—**अनुभवजन्येति** । अनुभववारणायानु-

---

१ **नातिप्रसङ्ग इति** । मीमांसकमते ज्योतिष्टोमादेर्धर्मत्वेऽपि नैयायिकमते तज्जन्यस्यापूर्वस्यैव धर्मत्वाज्ज्योतिष्टोमस्याऽधर्मत्वमिति भावः ।

भवजन्येति । स्मृतिवारणाय स्मृतिहेतुरिति । भावनाख्यसंस्कारस्तूद्बुद्ध एव स्मृतिं जनयति । उद्बोधश्च संस्कारस्य सहकारिलाभः । सहकारिणश्च संस्कारस्य सदृशदर्शनादयः । तथाचोक्तं—सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधकाः । इति ॥

अन्यथाकृतस्य पुनस्तदवस्थापादकः स्थितिस्थापकः कटादिपृथिवीवृत्तिः ॥ इति गुणाः ॥

स्थितिस्थापकं लक्षयति—अन्यथेति । तदाश्रयमाह—कटादीति । इतीति समाप्ता गुणा इत्यर्थः ॥

चलनात्मकं कर्म । ऊर्ध्वदेशसंयोगहेतुरुत्क्षेपणम् । अधोदेशसंयोगहेतुरपक्षेपणम् । शरीरस्य संनिकृष्टसंयोगहेतुराकुञ्चनम् । विप्रकृष्टसंयोगहेतुः प्रसारणम् । अन्यत्सर्वं गमनम् ॥

उद्देश्यक्रमेण कर्म निरूपयति—चलनात्मकमिति । गुणवद्द्रव्यमात्रवृत्तीति शेषः ।

नित्यमेकमनेकानुगतं सामान्यम् । द्रव्यगुणकर्मवृत्ति । परं सत्ता । अपरं द्रव्यत्वादि ॥

सामान्यं लक्षयति—नित्यमिति ।

नित्यद्रव्यवृत्तयो व्यावर्तका विशेषाः ॥

विशेषपदार्थस्य स्वरूपमाह—नित्यद्रव्यवृत्तय इति । पूर्वमेव व्याख्याताः ।

नित्यसंबन्धः समवायः । अयुतसिद्धवृत्तिः । ययोर्द्वयोर्मध्य एकमविनश्यदवस्थमपराश्रितमेवावतिष्ठते तावयुतसिद्धौ । यथा अवयवावयविनौ गुणगुणिनौ क्रियाक्रियावन्तौ जातिव्यक्ती विशेषनित्यद्रव्ये चेति ॥

समवायं लक्षयति—नित्यसंबन्ध इति । ययोरिति । घट-

कपालयोर्मध्ये एको घटः नाशमप्राप्यैव कपालाश्रित एवावतिष्ठते तौ घटकपालौ अयुतसिद्धावित्यर्थः । एवमन्यत्रापि ।

**अनादिः सान्तः प्रागभावः । उत्पत्तेः पूर्वं कार्यस्य ॥**

प्रागभावं लक्षयति—अनादिरिति । घटादिवारणायानादिरिति । आकाशादिवारणाय सान्त इति ॥

**सादिरनन्तः प्रध्वंसः । उत्पत्त्यनन्तरं कार्यस्य ॥**

ध्वंसं लक्षयति—सादिरिति । परमाण्वादिवारणाय सादिरिति । घटादिवारणायानन्त इति । भग्ने घटे कपालमालायां घटध्वंसस्तिष्ठति स च मुद्गरप्रहारजन्यः अविनाशीति लक्षणसङ्गतिः ।

**त्रैकालिकसंसर्गावच्छिन्नप्रतियोगिताकोऽत्यन्ताभावः । यथा भूतले घटो नास्तीति ॥**

अत्यन्ताभावं लक्षयति—त्रैकालिकेति । स च एकपर्याप्तधर्मावच्छिन्नप्रतियोगिताकः, अनेकपर्याप्तधर्मावच्छिन्नप्रतियोगिताकश्च । तत्राद्यो घटत्वाद्यवच्छिन्नप्रतियोगिताकः । अपर उभयत्वाद्यवच्छिन्नप्रतियोगिताकः । नन्वत्यन्ताभावस्य त्रैकालिकत्वे यादृशभूतलाद्यवच्छेदेन घटादिकं दूरीकृतं पुनश्च कालान्तरेण तदानीतं तत्र घटसत्त्वदशायामपि तदत्यन्ताभावस्य सत्त्वात्तत्प्रतीतिः कथं न भवतीति चेन्न । संबन्धसंबन्ध्युभयसत्तायाः विशिष्टविषयकप्रत्यक्षप्रयोजकत्वेन संबन्धिनः अत्यन्ताभावस्य भूतलस्य च सत्त्वेऽपि घटाभाववद्भूतलमित्यादिज्ञानकालीनविशेष्यविशेषणभावरूपसंबन्धाभावेन तदानीं तत्प्रतीत्यनुदयात् । केचित्तूत्पादविनाशशाली चतुर्थोऽयमभाव इत्याहुः ।

प्राचीनास्तु ध्वंसप्रागभावयोरधिकरणे नात्यन्ताभावो वर्त्तते । नच तयोरधिकरणेऽपि रक्तं रूपं नास्तीति प्रत्ययानुरोधेनात्यन्ताभाववत्त्वाङ्गीकार आवश्यक इति वाच्यम् । तत्र तादृशप्रत्ययस्य

ध्वंसप्रागभावावगाहित्वात्। नच तादृशप्रत्ययस्य ध्वंसाद्यवगाहित्वे यत्र पूर्वरक्तस्य ध्वंसः भविष्यद्रक्तस्य च प्रागभावः मध्ये रक्ततादशायां ध्वंसप्रागभावयोः सत्त्वेन रक्तं रूपं नास्तीति कथं न प्रत्ययो भवतीति वाच्यम् । रक्ततादशायां रक्तान्तरध्वंसप्रागभावयोः सत्त्वेपि तत्र रक्तत्वावच्छिन्नप्रतियोगिकत्वाभावेन तादृशप्रतीतेरनुदयात् । नच ध्वंसप्रतियोगितायाः किंचिद्धर्मावच्छिन्नत्वे [1]मानाभावेन तत्तदनन्तरक्तध्वंसादिषु रक्तत्वावच्छिन्नप्रतियोगिताकत्वस्य कल्पनापेक्षया ध्वंसप्रागभावाधिकरणे रक्तं रूपं नास्तीति प्रतीतिरत्यन्ताभावमेवावगाहतामिति वाच्यम् । यावन्ति रक्तरूपाणि तत्तद्व्यक्तित्वेतरधर्मानवच्छिन्नतत्तद्व्यक्तिनिष्ठप्रतियोगिता[2]काभावैरेव रक्तं रूपं नास्तीति प्रत्ययोपपत्तेस्तदत्यन्ताभावावगाहित्वस्य निष्फलत्वेन मध्ये रक्ततादशायां च तद्व्यक्तिनिष्ठप्रतियोगिताकाभावस्यासत्वेन [3]क्षत्यभावादित्याहुस्तन्न। [4]तथासत्यन्तराश्यामे रक्तं रूपं नास्तीति निर्णयेऽपि तत्र रक्तं रूपमस्तीति प्रत्ययापत्तेः। नच तत्र प्रतिबन्धकस्य सत्त्वान्न तथा प्रत्यय इति वाच्यं, विरोधिनः सामान्याभावस्यानिश्चयात् विशेषाभावकूटनिश्चयस्य चाप्रतिबन्धकत्वात्। [5]अन्यथा विशेषाभावकूटेनैवोपपत्तौ सामान्याभावस्यापलापापत्तेरिति दिक् ॥

---

१ **मानाभावेनेति** । अभावीयप्रतियोगितायाः किंचिद्धर्मावच्छिन्नत्वे मानं तादृशाभाववत्तानिश्चयस्य प्रतिबन्धकत्वान्यथानुपपत्तिः । ध्वंसप्रागभाववत्तानिश्चयस्य तु कुत्राप्यप्रतिबन्धकत्वेन प्रतिबन्धकत्वानुपपत्तिरूपप्रतियोगितावच्छेदककल्पकाभावादित्यर्थः ।

२ तादृशाभावकूटस्य ( तादृशयावदभावानां ) रक्तं रूपं नास्तीति प्रतीतिविषयत्वकल्पनादित्यर्थः ।

३ **क्षत्यभावादिति** । मध्ये रक्ततादशायां 'रक्तं रूपं नास्ति' इतिप्रतीत्यापत्तेरभावादित्यर्थः ।

४ **तथासति** रक्तं रूप नास्तीति प्रतीतौ रक्तत्वाभावकूटस्य विषयत्वाङ्गीकारे इत्यर्थः ।

५ **अन्यथा** विशेषाभावकूटनिश्चयस्य प्रतिबन्धकत्वाङ्गीकारे इत्यर्थः ।

नन्वभावानामधिकरणात्मकत्वमस्तु लाघवादिति चेन्न । अनन्ताधिकरणस्वरूपकल्पनापेक्षयातिरिक्ताभावपदार्थकल्पनाया लघीयस्त्वात् । नचावश्यक्लृप्ततत्तत्स्वरूपेष्वभावत्वकल्पनं न गौरवावहमिति वाच्यम् । आधाराधेयभावानुपपत्तेः । ननु अभावाधिकरणकाभावप्रतियोगिकाभावस्याधिकरणस्वरूपत्वे यथाधाराधेयभावोपपत्तिस्तथा सर्वत्राप्यस्त्विति चेन्न । अभावस्याधिकरणात्मकत्वे तत्तच्छब्दगन्धरसाद्यभावानां प्रत्यक्षत्वानुपपत्तेः । येनेन्द्रियेण यत्प्रत्यक्षं तन्निष्ठा जातिस्तदभावश्च तेनेन्द्रियेण गृह्यत इति समयेन चाक्षुषज्ञानविषयघटादीनामात्मस्वरूपत्वेनात्मनश्चाक्षुषज्ञानाभावेनाप्रत्यक्षतापत्तेरित्यलं बहुशङ्कोत्थापनेनेति । एवमभावाभावस्तु प्रतियोगिस्वरूपः । अतिरिक्त इति केचित् ।

**तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकोऽन्योन्याभावः । यथा घटः पटो नेति ॥**

अन्योन्याभावं लक्षयति—तादात्म्येति । उदाहरति—यथेति । ननु घटः पटो न भवतीत्यत्र कस्य भेदः क विवक्षित इति चेत् उच्यते—यत्पदोत्तरं[1] नञ् श्रूयते तद्धर्मावच्छिन्नप्रतियोगिकभेद एव नञा विवक्षित इति नियमेन पटप्रतियोगिकभेदस्यैव घटे बोधनात् । नन्वेतादृशनियमस्वीकारे घटानधिकरणं भूतलमित्यादावपि घटभेदप्रत्ययापत्तिरितिचेन्न । नियमस्य समासातिरिक्तविषयकत्वेन संकोचात् । नच तथापि 'रात्रौ प्रकाशकश्चन्द्रो न वह्निर्न च भास्करः' इत्यत्र चन्द्रपदोत्तरं श्रूयमाणस्य नञश्चन्द्रभेदबोधकतापत्तिरिति वाच्यं, तात्पर्यविषयीभूतधर्मावच्छिन्नप्रतियोगिताकस्यैव बोधनात्[2] ।

**सर्वेषां पदार्थानां यथायथमुक्तेष्वन्तर्भावात्सप्तैव पदार्था इति सिद्धम् ।**

---

१ यत्पदोत्तरमिति यद्धर्मावच्छिन्नवाचकपदोत्तरमित्यर्थः ।

२ येन सह यस्यान्वयबोधे तात्पर्यं तत्पदोत्तरं तत्पदस्य कर्षणादिति भावः ।

ननु'प्रमाण–प्रमेय–संशय–प्रयोजन–दृष्टान्त–सिद्धान्ता–ऽवयव–तर्क–निर्णय–वाद–जल्प–वितण्डा–हेत्वाभास–च्छल–जाति–निग्रहस्थानानां तत्वज्ञानान्निःश्रेयसाधिगमः' इति न्यायस्यादिसूत्रे षोडशपदार्थानां प्रतिपादनात् सप्तैव पदार्था इति कथनमसङ्गतमित्यत आह–सर्वेषामिति । अन्तर्भावप्रकारश्चेत्थम्—प्रमाणस्येन्द्रियस्य द्रव्ये व्याप्तिज्ञानादेर्गुणे आत्म–शरीरे-न्द्रिया-ऽर्थ-बुद्धि-मनः-प्रवृत्ति-दोष-प्रेत्यभाव-फल-दुःखा-ऽपवर्गाः प्रमेयं, तत्रात्मशरीरेन्द्रियाणां द्रव्ये, अर्थस्य गन्धरसरूपस्पर्शशब्दस्वरूपस्य गुणे, बुद्धेर्गुणे, मनसो द्रव्ये, प्रवृत्तेर्गुणे, रागद्वेषमोहात्मकस्य दोषस्य गुणे, प्रेत्य मृत्वा भावो जननमिति व्युत्पत्त्या मरणोत्तरजन्मस्वरूपस्य प्रेत्यभावस्य गुणे, सुख-दुःखसंवेदनरूपस्य फलस्य गुणे, पीडालक्षणस्य दुःखस्य गुणेन्तर्भावः ।

अपवर्गस्तु मोक्षः एवैकविंशतिभेदभिन्नस्य दुःखस्यात्यन्तिकी निवृत्तिः । एकविंशतिदुःखानि च शरीरं, षडिन्द्रियाणि, षड्विषयाः, षड्बुद्धयः, सुखं, दुःखं च । नच शरीरादौ दुःखत्वजात्यभावात् कथं तद्दुःखशब्देनोच्यते इति वाच्यम् । तेषां सर्वेषामेव दुःखसंबन्धितया दुःखत्वस्य तत्राप्यारोपादौपचारिकस्तत्र दुःखशब्दप्रयोगः । नच मनसो नित्यत्वेन कथं तन्नाश इति वाच्यम् । यद्रूपविशिष्टस्य मनसो दुःखहेतुत्वं तद्विशिष्टस्यैव नाशात् । शिखी ध्वस्तः इत्यत्र यथा शिखाविशिष्टेऽविनश्यदवस्थेऽपि शिखायां नष्टायां तथा व्यवहारः तद्वदत्रापि इति बोध्यम् । दुःखनिवृत्तावात्यन्तिकत्वं च स्वसमानाधिकरणदुःखासमानकालीनत्वम् । **मोक्षप्रकारश्चेत्थं**—तत्वज्ञानेन मिथ्याज्ञानजन्यवासनानाशः । वासनानाशेन वासनाविशिष्टरागादेरभावः । तदभावेन प्रवृत्तेर्धर्माधर्मरूपाया अभावः । ततः जन्माभावः । ततश्च दुःखाभावः । ततश्च स्वसमानाधिकरणदुःखासमानकालीनैकविंशतिदुःखध्वंसात्मको मोक्षो भवति । तदुक्तं—

'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावादपवर्गः' इति । तथाचैतादृशस्यापवर्गस्याभावेऽन्तर्भावः ।

संशयस्य गुणे, साध्यतयेच्छाविषयरूपप्रयोजनस्य द्रव्यादिषु महानसादिरूपदृष्टान्तस्य द्रव्यादौ, उभयमतसिद्धसिद्धान्तस्य द्रव्यादिषु, अवयवस्य गुणे, निर्णयस्य गुणे, तर्कस्य गुणे, तत्त्वबुभुत्सोः कथारूपवादस्य गुणे, विजिगीषुकथारूपजल्पस्य गुणे, स्वपक्षस्थापनाहीनकथारूपवितण्डाया गुणे, हेत्वाभासानां यथायथं द्रव्यादिषु, अभिप्रायान्तरेण प्रयुक्तस्य शब्दस्यार्थान्तरं परिकल्प्य दूषणाभिधानरूपस्य छलस्य गुणे, असदुत्तररूपजातेर्गुणे, पराजयहेतुस्वरूपनिग्रहस्थानानां यथायथं द्रव्यादिषु, तत्र विशिष्य प्रतिज्ञातस्य पक्षादेः परित्यागरूपप्रतिज्ञाहानेरभावे, परोक्तदोषोद्दिधीर्षया पूर्वानुक्तविशेषणविशिष्टतया प्रतिज्ञातार्थकथनरूपस्य प्रतिज्ञान्तरस्य गुणे, स्वोक्तसाध्यादिविरुद्धहेत्वादिकथनरूपप्रतिज्ञाविरोधस्य गुणे, स्वोक्तसाध्यादौ परेण दूषिते तत्साध्यापलापरूपस्य प्रतिज्ञासंन्यासस्याभावे, परोक्तदूषणोद्दिधीर्षया पूर्वोक्तहेतुतावच्छेदकातिरिक्तहेतुतावच्छेदकविशिष्टहेतुकथनरूपहेत्वन्तरस्य गुणे, प्रकृतानाकाङ्क्षिताभिधानरूपार्थान्तरस्य गुणे, अबाचकपदप्रयोगरूपनिरर्थकस्य गुणे, अविज्ञातार्थस्य गुणे, अपार्थकस्य गुणे, अप्राप्तकालस्य गुणे, न्यूनस्य गुणे, अधिकस्य गुणे, पुनरभिधानरूपस्य पुनरुक्तस्य गुणे, अननुभाषणस्याभावे, अविज्ञानस्याभावे, अप्रतिभाया अभावे, विक्षेपस्याभावे, मतानुज्ञायाः गुणे, पर्यनुयोज्योपेक्षणस्याभावे, निरनुयोज्यानुयोगस्य गुणे, अपसिद्धान्तस्याभावे, हेत्वाभासानां द्रव्यादिष्वन्तर्भाव इति । एते निग्रहस्थानीयाः ॥ इति सप्तैव पदार्था इति सिद्धम् ॥

पदार्थानां साधर्म्यवैधर्म्ये निरूप्येते—अभिधेयत्वं प्रमेयत्वं

१ जातिः परस्य स्वसाम्यापादकमुत्तरम् ।

वाच्यत्वं ज्ञेयत्वं सप्तानां साधर्म्यम्। सच्चितिप्रतीतिविषयत्वं भावत्वं षण्णां साधर्म्यम्। अनेकत्वे सति भावत्वं पञ्चानां साधर्म्यम्। समवायान्यत्वे सति समवेतवृत्तिपदार्थविभाजकोपाधिमत्त्वं चतुर्णां साधर्म्यम्। सत्तावत्त्वं त्रयाणां साधर्म्यम्। कर्मान्यत्वे सति सत्तावत्त्वं द्वयोः साधर्म्यम्। गुणवत्त्वं कर्मवत्त्वं द्रव्यस्य साधर्म्यम्। महत्परिमाणवत्त्वम् अष्टानां साधर्म्यम्। ज्ञानानधिकरणत्वे सति मनोऽन्यत्वं सप्तानां साधर्म्यम्। मनोदिगन्यत्वे सति ज्ञानानधिकरणत्वं षण्णां साधर्म्यम्। परत्वादिसमानाधिकरणद्रव्यत्वजातिमत्त्वं, मूर्तत्वं, क्रियावत्त्वं, पञ्चानां क्षित्यप्तेजःपवनमनसां साधर्म्यम्। कालाकाशदिगात्मनां सर्वगतत्वं साधर्म्यम्। क्षित्यादीनां पञ्चानां भूतत्वं साधर्म्यम्। स्पर्शवत्त्वं द्रव्यारम्भकत्वं च चतुर्णां साधर्म्यम्। रूपवत्त्वं त्रयाणां साधर्म्यम्। पृथिवीजलयोः गुरुत्वं साधर्म्यम्। गन्धवत्त्वं पृथिव्याः साधर्म्यम्। रूपादिचतुष्टय-सांसिद्धिकद्रवत्व-स्नेहादिदश-भावनानां विशेषगुणत्वम्। सङ्ख्याद्यष्ट नैमित्तिकद्रवत्वं वेगानां सामान्यगुणत्वम्। सङ्ख्यादिपञ्चानां मूर्तामूर्तोभयवृत्तिगुणत्वम्। एकत्वभिन्नसङ्ख्यैकपृथक्त्वभिन्नपृथक्त्वसंयोगविभागानामनेकवृत्तिगुणत्वम्। तदन्येषां गुणानामेकैकवृत्तिगुणत्वम्। रूपादिचतुष्टयशब्दानां बाह्यैकैकेन्द्रियग्राह्यगुणत्वम्, सङ्ख्याद्यष्ट द्रवत्व-स्नेह वेगानां द्वीन्द्रियग्राह्यगुणत्वम्। बुद्ध्यादिषट्कानामन्तरिन्द्रियग्राह्यगुणत्वम्। गुरुत्वधर्माधर्मभावनानामतीन्द्रियगुणत्वम्। अपाकप्रभवरूपादिचतुष्टय मध्यमपरिमाणैकपृथक्त्व—गुरुत्व—सांसिद्धिकद्रवत्व—स्नेह—वेग—स्थितिस्थापकानां कारणगुणपूर्वकत्वम्, जन्यद्रव्यवृत्तिविशेषगुणानामकारणगुणपूर्वकत्वम्। संयोग विभाग वेगानां कर्मासमवायिकारणत्वं कारणगुणसमवायिकारणत्वं च। संयोग विभाग शब्दाद्यष्ट भावानामव्याप्यवृत्तिगुणत्वम्। बुद्धीच्छाद्वेषप्रयत्नभावनानां सविषयत्वम्। गन्ध संयोगादिचतुष्टय शब्द-सुख दुःख द्वेष धर्मा-ऽधर्म स

स्काराणामनित्यगुणत्वम् । तदितरगुणानां नित्यगुणत्वं साधर्म्यं ज्ञेयम् ॥ एवं ज्ञेयत्वादिकं विहाय यस्य यत्साधर्म्यमुक्तं तदितरेषां वैधर्म्यम् । यथा द्रव्यादित्रिकाणां साधर्म्यमुक्तं तत्सामान्यादीनां वैधर्म्यमेवं गुणवत्त्वं द्रव्यस्य साधर्म्यमुक्तं तत्तु गुणादीनां वैधर्म्यं ज्ञेयमेवमन्यत्रापि स्वयमूह्यम् ॥ इति दिक् ।

**काणादन्यायमतयोर्बालव्युत्पत्तिसिद्धये ।**
**अन्नंभट्टेन विदुषा रचितस्तर्कसंग्रहः ॥**

इति श्रीमदन्नंभट्टविरचितस्तर्कसंग्रहः समाप्तः ॥

ननु कतमद्दर्शनमयमनुसरति? न तावत्काणादं, प्रमाणचतुष्टयप्रतिपादनात्[1]; नापि गौतमीयं, सप्तपदार्थप्रतिपादनादित्याशङ्कायामाह— **काणादेत्यादि** । तथाच दर्शनद्वयव्युत्पित्सुभिरध्येतव्योऽयं ग्रन्थ इति भावः ॥

**ननु** सप्तपदार्थज्ञानात्[2] किं भवतीति चेत् मोक्षपदार्थः तस्य वाक्यार्थज्ञानाधीनत्वात्, वाक्यार्थज्ञानस्य च पदार्थज्ञानाधीनत्वात् । अतः पदार्थज्ञानस्य मोक्षोपयोगित्वं परंपरया सिद्ध्यति ।

स च मोक्षः स्वर्गादिरूप इति **मीमांसकाः** । नित्यसुखाभिव्यक्तिरिति तदेकदेशिनः । अहंकारनिवृत्तौ औदासीन्यमिति **कपिलानुयायिनः** । तत्वज्ञानेन मिथ्यादिवासनादिनिवृत्तौ चैतन्य-रूपस्य जीवस्य ब्रह्मणैक्यमिति **शाङ्कराः** । सारूप्य-सामीप्य-सार्ष्टि-एकत्वमिति चतुर्विधो मोक्षः इति **पौराणिकाः** ।

अविदितसुखदुःखं निर्गुणं वस्तु किंचि-
ज्जडमतिरिह कश्चिन्मोक्ष इत्याचचक्षे ।

---

१ **प्रमाणचतुष्टयेति** गौतमीयत्वावगमकम् ।
२ **सप्तपदार्थेति** काणादत्वावबोधकम् ।

मम तु मतमनङ्गस्मेरतारुण्यघूर्ण-
न्मदकलमदिराक्षीनीविमोक्षो हि मोक्षः ॥

इति स्वतन्त्रालंकारिकाः ॥

तथाचैतच्छास्त्रस्य मोक्षोपयोगित्वात् मुमुक्षुभिरेतदवश्यमध्येतव्यम् । यद्यप्यस्मदादीनां कुतर्ककर्कशबुद्धिसार्वभौमादिमायावादिनिवारकसकलकरुणावतारवैष्णववृन्दवन्दितचरणकमलदीनोद्धारकश्रीनन्दनन्दनाभेदमूर्तिकश्रीमद्वल्लभाचार्याश्रितानां वैष्णवप्रवराणां श्रीनन्दनन्दनशरणगतानां तदध्ययनं नोचितं, यतः—

सारूप्य–सार्ष्टि–सामीप्य–सारूप्यैकत्वमप्युत ।
दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः ।

इति भगवदुक्तपरमभागवतसद्धर्मपुष्टिमार्गानुयायिनः
'न कामये नाथ तदप्यहं क्वचि-
न्न यत्र युष्मच्चरणाम्बुजासवम्' ।

इति पुनः पुनः कामयमाना वयं तादृशमोक्षादिकमपि तुच्छीकृत्य गणयामस्तदुक्तं—

तुलयामि लवेनापि न स्वर्गं नापुनर्भवम् ।
भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः ॥ इति

तथापि श्रीमद्गोस्वामिश्रीमद्वल्लभाचार्यभक्तिप्रतिपादकेषु परं रमणीयतरगम्भीरार्थकमहावाक्येषु बोधोपयोगित्वात् अस्मदादिभिरपि तन्मार्गस्थैरवश्यमेवैतच्छास्त्रमध्येतव्यमतो व्याख्यातमिति दिक् ।

श्रीकृष्णचन्द्रचरणाम्बुजसेवकेन
गोवर्द्धनस्य हि कृपाम्बुधिभाजनेन । .
श्रीमन्महीध्रधरपादसुभक्तिकेन
टीका समाप्तिमगमत् सुधिया कृतेयम् ॥ १ ॥

भोग्यब्धिनन्दविपुलाप्रमिते सुरम्ये
संवत्सरेऽग्निसुतिथौ बुधवासरे च ।
सिन्धोस्तटे परमरम्यतमे प्रणीता
मुरलीधरेण विदुषार्यविनोदनाय ॥ २ ॥

इति हैदराबादपुटभेदनिवासि-पुष्करणीज्ञात्यवतंस-श्रीमद्वल्लभाचार्यमतानुयायि-श्रीमद्विद्वद्वृन्दवन्द्यपादश्रीगोस्वामिश्रीगोविन्दलालचरणशिष्य-मापारेलघटङ्कित-मुरलीधरकृतिवरकृता तर्कविलासिनी टीका समाप्तिमगमत् ॥

